## 1000 घटिष् ( घट् ) चेष्टायाम् ।

चेष्टेहा ।

व० घटते घटेते घटन्ते
घटसे घटेथे घटध्वे
घटे घटावहे घटामहे

स० घटेत घटेयाताम् घटेरन्
घटेथाः घटेयाथाम् घटेध्वम्
घटेय घटेवहि घटेमहि

प० घटताम् घटेताम् घटन्ताम्
घटस्व घटेथाम् घटध्वम्
घटै घटावहै घटामहै

ह्य० अघटत अघटेताम् अघटन्त
अघटथाः अघटेथाम् अघटध्वम्
अघटे अघटावहि अघटामहि

अ० अघटिष्ट अघटिषाताम् अघटिषत
अघटिष्ठाः अघटिषाथाम् अघटिढ्ढ्वम् ध्वम्
अघटिषि अघटिष्वहि अघटिष्महि

प० जघटे जघटाते जघटिरे
जघटिषे जघटाथे जघटिध्वे
जघटे जघटिवहे जघटिमहे

आ० घटिषीष्ट घटिषीयास्ताम् घटिषीरन्
घटिषीष्ठाः घटिषीयास्थाम् घटिषीध्वम्
घटिषीय घटिषीवहि घटिषीमहि

श्व० घटिता घटितारौ घटितारः
घटितासे घटितासाथे घटिताध्वे
घटिताहे घटितास्वहे घटितास्महे

भ० घटिष्यते घटिष्येते घटिष्यन्ते
घटिष्यसे घटिष्येथे घटिष्यध्वे
घटिष्ये घटिष्यावहे घटिष्यामहे

क्रि० अघटिष्यत अघटिष्येताम् अघटिष्यन्त
अघटिष्यथाः अघटिष्येथाम् अघटिष्यध्वम्
अघटिष्ये अघटिष्यावहि अघटिष्यामहि

## अथ जान्ताः ।

## 1001 क्षजुङ् ( क्षञ्ज् ) गतिदानयोः

व० क्षञ्जते क्षञ्जेते क्षञ्जन्ते
क्षञ्जसे क्षञ्जेथे क्षञ्जध्वे
क्षञ्जे क्षञ्जावहे क्षञ्जामहे

स० क्षञ्जेत क्षञ्जेयाताम् क्षञ्जेरन्
क्षञ्जेथाः क्षञ्जेयाथाम् क्षञ्जेध्वम्
क्षञ्जेय क्षञ्जेवहि क्षञ्जेमहि

प० क्षञ्जताम् क्षञ्जेताम् क्षञ्जन्ताम्
क्षञ्जस्व क्षञ्जेयाथाम् क्षञ्जध्वम्
क्षञ्जै क्षञ्जावहै क्षञ्जामहै

ह्य० अक्षञ्जत अक्षञ्जेताम् अक्षञ्जन्त
अक्षञ्जथाः अक्षञ्जेथाम् अक्षञ्जध्वम्
अक्षञ्जे अक्षञ्जावहि अक्षञ्जामहि

अ० अक्षञ्जिष्ट अक्षञ्जिषाताम् अक्षञ्जिषत
अक्षञ्जिष्ठाः अक्षञ्जिषाथाम् अक्षञ्जिढ्ढ्वम् ध्वम्
अक्षञ्जिषि अक्षञ्जिष्वहि अक्षञ्जिष्महि

प० चक्षञ्जे चक्षञ्जाते चक्षञ्जिरे
चक्षञ्जिषे चक्षञ्जाथे चक्षञ्जिध्वे
चक्षञ्जे चक्षञ्जिवहे चक्षञ्जिमहे

आ० क्षञ्जिषीष्ट क्षञ्जिषीयास्ताम् क्षञ्जिषीरन्
क्षञ्जिषीष्ठाः क्षञ्जिषीयास्थाम् क्षञ्जिषीध्वम्
क्षञ्जिषीय क्षञ्जिषीवहि क्षञ्जिषीमहि

श्व० क्षञ्जिता क्षञ्जितारौ क्षञ्जितारः
क्षञ्जितासे क्षञ्जितासाथे क्षञ्जिताध्वे
क्षञ्जिताहे क्षञ्जितास्वहे क्षञ्जितास्महे

भ० क्षञ्जिष्यते क्षञ्जिष्येते क्षञ्जिष्यन्ते
क्षञ्जिष्यसे क्षञ्जिष्येथे क्षञ्जिष्यध्वे
क्षञ्जिष्ये क्षञ्जिष्यावहे क्षञ्जिष्यामहे

अक्षञ्जिष्यत अक्षञ्जिष्येताम् अक्षञ्जिष्यन्त
अक्षञ्जिष्यथाः अक्षञ्जिष्येथाम् अक्षञ्जिष्यध्वम्
अक्षञ्जिष्ये अक्षञ्जिष्यावहि अक्षञ्जिष्यामहि

श्रुणु कृच्छ्रजीवने इति पठिष्यमाणत्वेऽपि गतिदानयोः घटादिकार्यार्थमात्मनेपदार्थं णिच्रहितशप्प्रत्ययार्थञ्चात्र पाठः ।

## अथ थान्तौ ॥

## 1002 व्यथिष् ( व्यथ् ) भयचलनयोः। दुःखेऽप्यन्ये

व० व्यथते व्यथेते व्यथन्ते
व्यथसे व्यथेथे व्यथध्वे
व्यथे व्यथावहे व्यथामहे

स० व्यथेत व्यथेयाताम् व्यथेरन्
व्यथेथाः व्यथेयाथाम् व्यथेध्वम्
व्यथेय व्यथेवहि व्यथेमहि

प० व्यथताम् व्यथेताम् व्यथन्ताम्
व्यथस्व व्यथेथाम् व्यथध्वम्
व्यथै व्यथावहै व्यथामहै

ह्य० अव्यथत अव्यथेताम् अव्यथन्त
अव्यथथाः अव्यथेथाम् अव्यथध्वम्
अव्यथे अव्यथावहि अव्यथामहि

अ० अव्यथिष्ट अव्यथिषाताम् अव्यथिषत
अव्यथिष्ठाः अव्यथिषाथाम् अव्यथिढ्ढ्वम् ध्वम्
अव्यथिषि अव्यथिष्वहि अव्यथिष्महि

प० विव्यथे विव्यथाते विव्यथिरे
विव्यथिषे विव्यथाथे विव्यथिध्वे
विव्यथे विव्यथिवहे विव्यथिमहे

आ० व्यथिषीष्ट व्यथिषीयास्ताम् व्यथिषीरन्
व्यथिषीष्ठाः व्यथिषीयास्थाम् व्यथिषीध्वम्
व्यथिषीय व्यथिषीवहि व्यथिषीमहि

श्व० व्यथिता व्यथितारौ व्यथितारः
व्यथितासे व्यथितासाथे व्यथिताध्वे
व्यथिताहे व्यथितास्वहे व्यथितास्महे

भ० व्यथिष्यते व्यथिष्येते व्यथिष्यन्ते
व्यथिष्यसे व्यथिष्येथे व्यथिष्यध्वे
व्यथिष्ये व्यथिष्यावहे व्यथिष्यामहे

क्रि० अव्यथिष्यत अव्यथिष्येताम् अव्यथिष्यन्त
अव्यथिष्यथाः अव्यथिष्येथाम् अव्यथिष्यध्वम्
अव्यथिष्ये अव्यथिष्यावहि अव्यथिष्यामहि

## 1003 प्रथिष् ( प्रथ् ) प्रख्याने ।

प्रख्यानं प्रसिद्धिः ।

व० प्रथते प्रथेते प्रथन्ते
प्रथसे प्रथेथे प्रथध्वे
प्रथे प्रथावहे प्रथामहे

स० प्रथेत प्रथेयाताम् प्रथेरन्
प्रथेथाः प्रथेयाथाम् प्रथेध्वम्
प्रथेय प्रथेवहि प्रथेमहि

प० प्रथताम् प्रथेताम् प्रथन्ताम्
प्रथस्व प्रथेथाम् प्रथध्वम्
प्रथै प्रथावहै प्रथामहै

ह्य० अप्रथत अप्रथेताम् अप्रथन्त
अप्रथथाः अप्रथेथाम् अप्रथध्वम्
अप्रथे अप्रथावहि अप्रथामहि

अ० अप्रथिष्ट अप्रथिषाताम् अप्रथिषत
अप्रथिष्ठाः अप्रथिषाथाम् अप्रथिढ्ढ्वम् ध्वम्
अप्रथिषि अप्रथिष्वहि अप्रथिष्महि

प० पप्रथे पप्रथाते पप्रथिरे
पप्रथिषे पप्रथाथे पप्रथिध्वे
पप्रथे पप्रथिवहे पप्रथिमहे

आ० प्रथिषीष्ट प्रथिषीयास्ताम् प्रथिषीरन्
प्रथिषीष्ठाः प्रथिषीयास्थाम् प्रथिषीध्वम्
प्रथिषीय प्रथिषीवहि प्रथिषीमहि

श्व० प्रथिता प्रथितारौ प्रथितारः
प्रथितासे प्रथितासाथे प्रथिताध्वे
प्रथिताहे प्रथितास्वहे प्रथितास्महे

भ० प्रथिष्यते प्रथिष्येते प्रथिष्यन्ते
प्रथिष्यसे प्रथिष्येथे प्रथिष्यध्वे
प्रथिष्ये प्रथिष्यावहे प्रथिष्यामहे

क्रि० अप्रथिष्यत अप्रथिष्येताम् अप्रथिष्यन्त
अप्रथिष्यथाः अप्रथिष्येथाम् अप्रथिष्यध्वम्
अप्रथिष्ये अप्रथिष्यावहि अप्रथिष्यामहि

प्रथण् प्रख्याने इति पठिष्यमाणत्वेऽपि घटादिकार्यार्थमात्मने पदार्थं णिच्रहित शप्प्रत्ययार्थं चात्र पाठः ॥

## ॥ अथ दान्ताः पञ्च ॥

### 1004 म्रदिष् ( म्रद् ) मर्दने

व० म्रदते म्रदेते म्रदन्ते
म्रदसे म्रदेथे म्रदध्वे
म्रदे म्रदावहे म्रदामहे

स० म्रदेत म्रदेयाताम् म्रदेरन्
म्रदेथाः म्रदेयाथाम् म्रदेध्वम्
म्रदेय म्रदेवहि म्रदेमहि

प० म्रदताम् म्रदेताम् म्रदन्ताम्
म्रदस्व म्रदेथाम् म्रदध्वम्
म्रदै म्रदावहै म्रदामहै

ह्य० अम्रदत अम्रदेताम् अम्रदन्त
अम्रदथाः अम्रदेथाम् अम्रदध्वम्
अम्रदे अम्रदावहि अम्रदामहि

अ० अम्रदिष्ट अम्रदिषाताम् अम्रदिषत
अम्रदिष्ठाः अम्रदिषाथाम् अम्रदिढ्ढ्वम् ध्वम्
अम्रदिषि अम्रदिष्वहि अम्रदिष्महि

प० मम्रदे मम्रदाते मम्रदिरे
मम्रदिषे मम्रदाथे मम्रदिध्वे
मम्रदे मम्रदिवहे मम्रदिमहे

आ० म्रदिषीष्ट म्रदिषीयास्ताम् म्रदिषीरन्
म्रदिषीष्ठाः म्रदिषीयास्थाम् म्रदिषीध्वम्
म्रदिषीय म्रदिषीवहि म्रदिषीमहि

श्व० म्रदिता म्रदितारौ म्रदितारः
म्रदितासे म्रदितासाथे म्रदिताध्वे
म्रदिताहे म्रदितास्वहे म्रदितास्महे

भ० म्रदिष्यते म्रदिष्येते म्रदिष्यन्ते
म्रदिष्यसे म्रदिष्येथे म्रदिष्यध्वे
म्रदिष्ये म्रदिष्यावहे म्रदिष्यामहे

क्रि० अम्रदिष्यत अम्रदिष्येताम् अम्रदिष्यन्त
अम्रदिष्यथाः अम्रदिष्येथाम् अम्रदिष्यध्वम्
अम्रदिष्ये अम्रदिष्यावहि अम्रदिष्यामहि

### 1005 स्खदिष् (स्खद्) स्खदने ।

स्खदनं विदारणम् ।

व० स्खदते स्खदेते स्खदन्ते
स्खदसे स्खदेथे स्खदध्वे
स्खदे स्खदावहे स्खदामहे

स० स्खदेत स्खदेयाताम् स्खदेरन्
स्खदेथाः स्खदेयाथाम् स्खदेध्वम्
स्खदेय स्खदेवहि स्खदेमहि

प० स्खदताम् स्खदेताम् स्खदन्ताम्
स्खदस्व स्खदेथाम् स्खदध्वम्
स्खदै स्खदावहै स्खदामहै

ह्य० अस्खदत अस्खदेताम् अस्खदन्त
अस्खदथाः अस्खदेथाम् अस्खदध्वम्
अस्खदे अस्खदावहि अस्खदामहि

अ० अस्खदिष्ट अस्खदिषाताम् अस्खदिषत
अस्खदिष्ठाः अस्खदिषाथाम् अस्खदिढ्ढ्वम् ध्वम्
अस्खदिषि अस्खदिष्वहि अस्खदिष्महि

प० चस्खदे चस्खदाते चस्खदिरे
चस्खदिषे चस्खदाथे चस्खदिध्वे
चस्खदे चस्खदिवहे चस्खदिमहे

आ० स्खदिषीष्ट स्खदिषीयास्ताम् स्खदिषीरन्
स्खदिषीष्ठाः स्खदिषीयास्थाम् स्खदिषीध्वम्
स्खदिषीय स्खदिषीवहि स्खदिषीमहि

श्व० स्खदिता स्खदितारौ स्खदितारः
स्खदितासे स्खदितासाथे स्खदिताध्वे
स्खदिताहे स्खदितास्वहे स्खदितास्महे

भ० स्खदिष्यते स्खदिष्येते स्खदिष्यन्ते
स्खदिष्यसे स्खदिष्येथे स्खदिष्यध्वे
स्खदिष्ये स्खदिष्यावहे स्खदिष्यामहे

क्रि० अस्खदिष्यत अस्खदिष्येताम् अस्खदिष्यन्त
अस्खदिष्यथाः अस्खदिष्येथाम् अस्खदिष्यध्वम्
अस्खदिष्ये अस्खदिष्यावहि अस्खदिष्यामहि

## 1006 कदुङ् (कन्दु) वैक्लव्ये ।

विक्लवः कातरस्तस्य भावः कर्म वा वैक्लव्यम्

व० कन्दते कन्देते कन्दन्ते
कन्दसे कन्देथे कन्दध्वे
कन्दे कन्दावहे कन्दामहे

स० कन्देत कन्देयाताम् कन्देरन्
कन्देथाः कन्देयाथाम् कन्देध्वम्
कन्देय कन्देवहि कन्देमहि

प० कन्दताम् कन्देताम् कन्दन्ताम्
कन्दस्व कन्देथाम् कन्दध्वम्
कन्दै कन्दावहै कन्दामहै

ह्य० अकन्दत अकन्देताम् अकन्दन्त
अकन्दथाः अकन्देथाम् अकन्दध्वम्
अकन्दे अकन्दावहि अकन्दामहि

अ० अकन्दिष्ट अकन्दिषाताम् अकन्दिषत
अकन्दिष्ठाः अकन्दिषाथाम् अकन्दिड्ढ्वम्
ध्वम्
अकन्दिषि अकन्दिष्वहि अकन्दिष्महि

प० चकन्दे चकन्दाते चकन्दिरे
चकन्दिषे चकन्दाथे चकन्दिध्वे
चकन्दे चकन्दिवहे चकन्दिमहे

आ० कन्दिषीष्ट कन्दिषीयास्ताम् कन्दिषीरन्
कन्दिषीष्ठाः कन्दिषीयास्थाम् कन्दिषीध्वम्
कन्दिषीय कन्दिषीवहि कन्दिषीमहि

श्व० कन्दिता कन्दितारौ कन्दितारः
कन्दितासे कन्दितासाथे कन्दिताध्वे
कन्दिताहे कन्दितास्वहे कन्दितास्महे

भ० कन्दिष्यते कन्दिष्येते कन्दिष्यन्ते
कन्दिष्यसे कन्दिष्येथे कन्दिष्यध्वे
कन्दिष्ये कन्दिष्यावहे कन्दिष्यामहे

अकन्दिष्यत अकन्दिष्येताम् अकन्दिष्यन्त
अकन्दिष्यथाः अकन्दिष्येथाम् अकन्दिष्य-
ध्वम्
अकन्दिष्ये अकन्दिष्यावहि अकन्दिष्यामहि

कदु रोदनाह्वानयोरिति पठितत्वेऽपि वै-
क्लव्ये घटादिकार्यार्थं मात्मनेपदार्थं चात्राधीतः

## 1007 क्रदुङ् (क्रन्दु) वैक्लव्ये ।

विक्लवः कातरस्तस्य भावः कर्म वा वैक्लव्यम्

व० क्रन्दते क्रन्देते क्रन्दन्ते
क्रन्दसे क्रन्देथे क्रन्दध्वे
क्रन्दे क्रन्दावहे क्रन्दामहे

स० क्रन्देत क्रन्देयाताम् क्रन्देरन्
क्रन्देथाः क्रन्देयाथाम् क्रन्देध्वम्
क्रन्देय क्रन्देवहि क्रन्देमहि

प० क्रन्दताम् क्रन्देताम् क्रन्दन्ताम्
क्रन्दस्व क्रन्देथाम् क्रन्दध्वम्
क्रन्दै क्रन्दावहै क्रन्दामहै

ह्य० अक्रन्दत अक्रन्देताम् अक्रन्दन्त
अक्रन्दथाः अक्रन्देथाम् अक्रन्दध्वम्
अक्रन्दे अक्रन्दावहि अक्रन्दामहि

अ० अक्रन्दिष्ट अक्रन्दिषाताम् अक्रन्दिषत
अक्रन्दिष्ठाः अक्रन्दिषाथाम् अक्रन्दिड्ढ्वम्
ध्वम्
अक्रन्दिषि अक्रन्दिष्वहि अक्रन्दिष्महि

प० चक्रन्दे चक्रन्दाते चक्रन्दिरे
चक्रन्दिषे चक्रन्दाथे चक्रन्दिध्वे
चक्रन्दे चक्रन्दिवहे चक्रन्दिमहे

आ० क्रन्दिषीष्ट क्रन्दिषीयास्ताम् क्रन्दिषीरन्
क्रन्दिषीष्ठाः क्रन्दिषीयास्थाम् क्रन्दिषीध्वम्
क्रन्दिषीय क्रन्दिषीवहि क्रन्दिषीमहि

श्व० क्रन्दिता क्रन्दितारौ क्रन्दितारः
क्रन्दितासे क्रन्दितासाथे क्रन्दिताध्वे
क्रन्दिताहे क्रन्दितास्वहे क्रन्दितास्महे

भ० क्रन्दिष्यते क्रन्दिष्येते क्रन्दिष्यन्ते
क्रन्दिष्यसे क्रन्दिष्येथे क्रन्दिष्यध्वे
क्रन्दिष्ये क्रन्दिष्यावहे क्रन्दिष्यामहे

क्रि० अक्रन्दिष्यत अक्रन्दिष्येताम् अक्रन्दिष्यन्त
अक्रन्दिष्यथाः अक्रन्दिष्येथाम् अक्रन्दिष्यध्वम्
अक्रन्दिष्ये अक्रन्दिष्यावहि अक्रन्दिष्यामहि

क्रदु रोदनाह्वानयोरिति पठितत्वेऽपि वैक्लव्ये
घटादिकार्यार्थमात्मनेपदार्थं चेहाधीतः ।

## 1008 कलदुङ् (कलन्द्) वैकल्ये ।

विकलवः कातरस्तस्य भावः कर्म वा वैकल्यम्

व० कलन्दते कलन्देते कलन्दन्ते
कलन्दसे कलन्देथे कलन्दध्वे
कलन्दे कलन्दावहे कलन्दामहे

स० कलन्देत कलन्देयाताम् कलन्देरन्
कलन्देथाः कलन्देयाथाम् कलन्देध्वम्
कलन्देय कलन्देवहि कलन्देमहि

प० कलन्दताम् कलन्देताम् कलन्दन्ताम्
कलन्दस्व कलन्देथाम् कलन्दध्वम्
कलन्दै कलन्दावहै कलन्दामहै

ह्य० अकलन्दत अकलन्देताम् अकलन्दन्त
अकलन्दथाः अकलन्देथाम् अकलन्दध्वम्
अकलन्दे अकलन्दावहि अकलन्दामहि

अ० अकलन्दिष्ट अकलन्दिषाताम् अकलन्दिषत
अकलन्दिष्ठाः अकलन्दिषाथाम् अकलन्दिड्ढ्वम् ध्वम्
अकलन्दिषि अकलन्दिष्वहि अकलन्दिष्महि

प० चकलन्दे चकलन्दाते चकलन्दिरे
चकलन्दिषे चकलन्दाथे चकलन्दिध्वे
चकलन्दे चकलन्दिवहे चकलन्दिमहे

आ० कलन्दिषीष्ट कलन्दिषीयास्ताम् कलन्दिषीरन्
कलन्दिषीष्ठाः कलन्दिषीयास्थाम् कलन्दिषीध्वम्
कलन्दिषीय कलन्दिषीवहि कलन्दिषीमहि

श्व० कलन्दिता कलन्दितारौ कलन्दितारः
कलन्दितासे कलन्दितासाथे कलन्दिताध्वे
कलन्दिताहे कलन्दितास्वहे कलन्दितास्महे

भ० कलन्दिष्यते कलन्दिष्येते कलन्दिष्यन्ते
कलन्दिष्यसे कलन्दिष्येथे कलन्दिष्यध्वे
कलन्दिष्ये कलन्दिष्यावहे कलन्दिष्यामहे

अकलन्दिष्यत अकलन्दिष्येताम् अकलन्दिष्यन्त
अकलन्दिष्यथाः अकलन्दिष्येथाम् अकलन्दिष्य-ध्वम्
अकलन्दिष्ये अकलन्दिष्यावहि अकलन्दिष्यामहि

कलदु रोदनाह्वानयोरिति पठितस्थेऽपि वैकल्ये चरादिकार्यार्थं मात्मनेपदार्थश्चेहाधीतः।

## अथ पान्ताः ॥

## 1009 कपि ( कप् ) कृपायाम् ।

व० कपते कपेते कपन्ते
कपसे कपेथे कपध्वे
कपे कपावहे कपामहे

स० कपेत कपेयाताम् कपेरन्
कपेथाः कपेयाथाम् कपेध्वम्
कपेय कपेवहि कपेमहि

प० कपताम् कपेताम् कपन्ताम्
कपस्व कपेथाम् कपध्वम्
कपै कपावहै कपामहै

ह्य० अकपत अकपेताम् अकपन्त
अकपथाः अकपेथाम् अकपध्वम्
अकपे अकपावहि अकपामहि

अ० अकपिष्ट अकपिषाताम् अकपिषत
अकपिष्ठाः अकपिषाथाम् अकपिड्ढ्वम् ध्वम्
अकपिषि अकपिष्वहि अकपिष्महि

प० चकपे चकपाते चकपिरे
चकपिषे चकपाथे चकपिध्वे
चकपे चकपिवहे चकपिमहे

आ० कपिषीष्ट कपिषीयास्ताम् कपिषीरन्
कपिषीष्ठाः कपिषीयास्थाम् कपिषीध्वम्
कपिषीय कपिषीवहि कपिषीमहि

श्व० कपिता कपितारौ कपितारः
कपितासे कपितासाथे कपिताध्वे
कपिताहे कपितास्वहे कपितास्महे

भ० कपिष्यते कपिष्येते कपिष्यन्ते
कपिष्यसे कपिष्येथे कपिष्यध्वे
कपिष्ये कपिष्यावहे कपिष्यामहे

क्रि० अकपिष्यत अकपिष्येताम् अकपिष्यन्त
अकपिष्यथाः अकपिष्येथाम् अकपिष्यध्वम्
अकपिष्ये अकपिष्यावहि अकपिष्यामहि

अथ रान्तः ॥

1010 ञित्वरिष् ( त्वर् ) संभ्रमे । संभ्रमोत्रा शुकारिता ।

व० त्वरते त्वरेते त्वरन्ते
त्वरसे त्वरेथे त्वरध्वे
त्वरे त्वरावहे त्वरामहे

स० त्वरेत त्वरेयाताम् त्वरेरन्
त्वरेथाः त्वरेयाथाम् त्वरेध्वम्
त्वरेय त्वरेवहि त्वरेमहि

प० त्वरताम् त्वरेताम् त्वरन्ताम्
त्वरस्व त्वरेयाथाम् त्वरेध्वम्
त्वरै त्वरावहै त्वरामहै

ह्य० अत्वरत अत्वरेताम् अत्वरन्त
अत्वरथाः अत्वरेथाम् अत्वरध्वम्
अत्वरे अत्वरावहि अत्वरामहि

अ० अत्वरिष्ट अत्वरिषाताम् अत्वरिषत
अत्वरिष्ठाः अत्वरिषाथाम् अत्वरिड्ढ्वं ढ्वम् ध्वम्
अत्वरिषि अत्वरिष्वहि अत्वरिष्महि

प० तत्वरे तत्वराते तत्वरिरे
तत्वरिषे तत्वराथे तत्वरिध्वे ढ्वे
तत्वरे तत्वरिवहे तत्वरिमहे

आ० त्वरिषीष्ट त्वरिषीयास्ताम् त्वरिषीरन्
त्वरिषीष्ठाः त्वरिषीयास्थाम् त्वरिषीध्वम्
त्वरिषीय त्वरिषीवहि त्वरिषीमहि

श्व० त्वरिता त्वरितारौ त्वरितारः
त्वरितासे त्वरितासाथे त्वरिताध्वे
त्वरिताहे त्वरितास्वहे त्वरितास्महे

भ० त्वरिष्यते त्वरिष्येते त्वरिष्यन्ते
त्वरिष्यसे त्वरिष्येथे त्वरिष्यध्वे
त्वरिष्ये त्वरिष्यावहे त्वरिष्यामहे

अत्वरिष्यत अत्वरिष्येताम् अत्वरिष्यन्त
अत्वरिष्यथाः अत्वरिष्येथाम् अत्वरिष्यध्वम्
अत्वरिष्ये अत्वरिष्यावहि अत्वरिष्यामहि

॥ अथ सान्तः ॥

1011 प्रसिष् ( प्रस ) विस्तारे ।

व० प्रसते प्रसेते प्रसन्ते
प्रससे प्रसेथे प्रसध्वे
प्रसे प्रसावहे प्रसामहे

प्रसेत प्रसेयाताम् प्रसेरन्
प्रसेथाः प्रसेयाथाम् प्रसेध्वम्
प्रसेय प्रसेवहि प्रसेमहि

प० प्रसताम् प्रसेताम् प्रसन्ताम्
प्रसस्व प्रसेथाम् प्रसध्वम्
प्रसै प्रसावहै प्रसामहै

ह्य० अप्रसत अप्रसेताम् अप्रसन्त
अप्रसथाः अप्रसेथाम् अप्रसध्वम्
अप्रसे अप्रसावहि अप्रसामहि

अ० अप्रसिष्ट अप्रसिषाताम् अप्रसिषत
अप्रसिष्ठाः अप्रसिषाथाम् अप्रसिड्ढ्वम् ध्वम्
अप्रसिषि अप्रसिष्वहि अप्रसिष्महि

प० पप्रसे पप्रसाते पप्रसिरे
पप्रसिषे पप्रसाथे पप्रसिध्वे
पप्रसे पप्रसिवहे पप्रसिमहे

आ० प्रसिषीष्ट प्रसिषीयास्ताम् प्रसिषीरन्
प्रसिषीष्ठाः प्रसिषीयास्थाम् प्रसिषीध्वम्
प्रसिषीय प्रसिषीवहि प्रसिषीमहि

श्व० प्रसिता प्रसितारौ प्रसितारः
प्रसितासे प्रसितासाथे प्रसिताध्वे
प्रसिताहे प्रसितास्वहे प्रसितास्महे

भ० प्रसिष्यते प्रसिष्येते प्रसिष्यन्ते
प्रसिष्यसे प्रसिष्येथे प्रसिष्यध्वे
प्रसिष्ये प्रसिष्यावहे प्रसिष्यामहे

क्रि० अप्रसिष्यत अप्रसिष्येताम् अप्रसिष्यन्त
अप्रसिष्यथाः अप्रसिष्येथाम् अप्रसिष्यध्वम्
अप्रसिष्ये अप्रसिष्यावहि अप्रसिष्यामहि

अथ क्षान्तः ॥

1012 दक्षि ( दक्ष् ) हिंसागत्योः ।
दक्षि शैघ्रये च इत्यस्यैवार्थभेदाद् घटादिकार्यार्थं पुनरिह पाठः । एतद्रूपाणि च दक्षि शैघ्रये च 875 इति वज्ञेयानि ।

अथ परस्मैपदिनः

1013 श्रां ( श्रै श्रा ) पाके
श्रै पाके इति पठितस्य श्रांक् पाके इति पठिष्यमाणस्य चेह घटादिकार्यार्थं पाठः । ततोऽस्य रूपाणि एकदा श्रै पाके 46 इति वत्, एकदा च श्रांक् पाके 1065 इति वज्ञेयानि ।

अथ ऋदुन्तः

1014 स्मृ [ स्मृ ] आध्याने ।
आध्यानमुत्कण्ठा । अन्यत्रोक्तस्यार्थविशेषे घटादिकार्यार्थमिह पाठः । एतद्रूपाणि च स्मृ' चिन्तायाम् 18इति वज्ञेयानि ।

अथ ऋदन्तौ

1015 दॄ भये ।

| | | |
|---|---|---|
| व० दरति | दरतः | दरन्ति |
| दरसि | दरथः | दरथ |
| दरामि | दरावः | दरामः |
| स० दरेत् | दरेताम् | दरेयुः |
| दरेः | दरेतम् | दरेत |
| दरेयम् | दरेव | दरेम |

प० दरतु दरतात् दरताम् दरन्तु
दर ,, दरतम दरत
दराणि दराव दराम

| | | |
|---|---|---|
| ह्य० अदरत् | अदरताम् | अदरन् |
| अदरः | अदरतम् | अदरत |
| अदरम् | अदराव | अदराम |
| अ० अदारीत् | अदारिष्टाम | अदारिषुः |
| अदारीः | अदारिष्टम् | अदारिष्ट |
| अदारिषम | अदारिष्व | अदारिष्म |

प० ददार ददरतुः दद्रतुः ददरुः दद्रुः
ददरिथ ददरथुः दद्रथुः ददर दद्र
ददार,ददर ददरिव दद्रिव ददरिम दद्रिम

| | | |
|---|---|---|
| आ० दीर्यात् | दीर्यास्ताम् | दीर्यासुः |
| दीर्याः | दीर्यास्तम् | दीर्यास्त |
| दीर्यासम् | दीर्यास्व | दीर्यास्म |
| श्व० दरीता | दरीतारौ | दरीतारः |
| दरीतासि | दरीतास्थः | दरीतास्थ |
| दरीतास्मि | दरीतास्वः | दरीतास्मः |
| दरिता | दरितारौ | दरितारः |
| दरितासि | दरितास्थः | दरितास्थ |
| दरितास्मि | दरितास्वः | दरितास्मः |
| भ० दरीष्यति | दरीष्यतः | दरीष्यन्ति |
| दरीष्यसि | दरीष्यथः | दरीष्यथ |
| दरीष्यामि | दरीष्यावः | दरीष्यामः |
| दरिष्यति | दरिष्यतः | दरिष्यन्ति |
| दरिष्यसि | दरिष्यथः | दरिष्यथ |
| दरिष्यामि | दरिष्यावः | दरिष्यामः |
| क्रि० अदरीष्यत् | अदरीष्यताम् | अदरीष्यन् |
| अदरीष्यः | अदरीष्यतम् | अदरीष्यत |
| अदरीष्यम् | अदरीष्याव | अदरीष्याम |
| अदरिष्यत् | अदरिष्यताम् | अदरिष्यन् |
| अदरिष्यः | अदरिष्यतम् | अदरिष्यत |
| अदरिष्यम् | अदरिष्याव | अदरिष्याम |

दॄश् विदारणे इति पठिष्यमाणस्येऽपि भये घटादिकार्यार्थं शब्दान्यार्थश्च पाठः ॥

1016 नॄ नये । ज्यादेर्घटादिकार्यार्थं चिरलोऽस्य पाठ. । एतद्रूपाणि च नॄश् नये 1537 इति वदेवसेयानि ॥

## 1017 स्तक ( स्तक् ) प्रतीघाते ।

व० स्तकति स्तकतः स्तकन्ति
स्तकसि स्तकथः स्तकथ
स्तकामि स्तकावः स्तकामः

स० स्तकेत् स्तकेताम् स्तकेयुः
स्तकेः स्तकेतम् स्तकेत
स्तकेयम् स्तकेव स्तकेम

प० स्तकतु स्तकतात् स्तकताम् स्तकन्तु
स्तक " स्तकतम् स्तकत
स्तकानि स्तकाव स्तकाम

ह्य० अस्तकत् अस्तकताम् अस्तकन्
अस्तकः अस्तकतम् अस्तकत
अस्तकम् अस्तकाव अस्तकाम

अ० अस्तकिष्ट अस्तकिषाताम् अस्तकिषत
अस्तकिष्ठाः अस्तकिषाथाम् अस्तकिड्ढ्वम् ध्वम्
अस्तकिषि अस्तकिष्वहि अस्तकिष्महि

प० तस्ताक तस्तकतुः तस्तकुः
तस्तकिथ तस्तकथुः तस्तक
तस्ताक-तस्तक तस्तकिव तस्तकिम

आ० स्तक्यात् स्तक्यास्ताम् स्तक्यासुः
स्तक्याः स्तक्यास्तम् स्तक्यास्त
स्तक्यासम् स्तक्यास्व स्तक्यास्म

श्व० स्तकिता स्तकितारौ स्तकितारः
स्तकितासि स्तकितास्थः स्तकितास्थ
स्तकितास्मि स्तकितास्वः स्तकितास्मः

भ० स्तकिष्यति स्तकिष्यतः स्तकिष्यन्ति
स्तकिष्यसि स्तकिष्यथः स्तकिष्यथ
स्तकिष्यामि स्तकिष्यावः स्तकिष्यामः

क्रि० अस्तकिष्यत् अस्तकिष्यताम् अस्तकिष्यन्
अस्तकिष्यः अस्तकिष्यतम् अस्तकिष्यत
अस्तकिष्यम् अस्तकिष्याव अस्तकिष्याम

1018 स्तक ( स्तक् ) प्रतीघाते । एतद्रूपाणि च ष्टक प्रतीघाते । 1017 इत्यिवज्ञेयानि उभयपाठस्तु तिष्टिक षियति निस्तक षियतीति षत्वविकल्पार्थः ।

## 1019 चक ( चक् ) तृप्तौ च ।

॥ चकारात्प्रतीघाते ॥

व० चकति चकतः चकन्ति
चकसि चकथः चकथ
चकामि चकावः चकामः

स० चकेत् चकेताम् चकेयुः
चकेः चकेतम् चकेत
चकेयम् चकेव चकेम

प० चकतु चकतात् चकताम् चकन्तु
चक " चकतम् चकत
चकानि चकाव चकाम

ह्य० अचकत् अचकताम् अचकन्
अचकः अचकतम् अचकत
अचकम् अचकाव अचकाम

अ० अचाकीत् अचाकिष्टाम् अचाकिषुः
अचाकीः अचाकिष्टम् अचाकिष्ट
अचाकिषम् अचाकिष्व अचाकिष्म

अ० अचकीत् अचकिष्टाम् अचकिषुः
अचकीः अचकिष्टम् अचकिष्ट
अचकिषम् अचकिष्व, अचकिष्म

प० चचाक चेकतुः चेकुः
चेकिथ चेकथुः चेक
चचाक,चचक चेकिव चेकिम

आ० चक्यात् चक्यास्ताम् चक्यासुः
चक्याः चक्यास्तम् चक्यास्त
चक्यासम् चक्यास्व चक्यास्म

श्व० चकिता चकितारौ चकितारः
चकितासि चकितास्थः चकितास्थ
चकितास्मि चकितास्वः चकितास्मः

भ० चकिष्यति चकिष्यतः चकिष्यन्ति
चकिष्यसि चकिष्यथः चकिष्यथ
चकिष्यामि चकिष्यावः चकिष्यामः

क्रि० अचकिष्यत् अचकिष्यताम् अचकिष्यन्
अचकिष्यः अचकिष्यतम् अचकिष्यत
अचकिष्यम् अचकिष्याव अचकिष्याम

चकि तृप्तिप्रतीघातयोरिति पठितत्वेऽपि घटादिकार्यार्थं परस्मैपदार्थं चेह पाठः ।

## 1020 अक ( अक् ) कुटिलायां गतौ।

| | | | |
|---|---|---|---|
| व० | अकति | अकतः | अकन्ति |
| | अकसि | अकथः | अकथ |
| | अकामि | अकावः | अकामः |
| स० | अकेत् | अकेताम् | अकेयुः |
| | अकेः | अकेतम् | अकेत |
| | अकेयम् | अकेव | अकेम |
| प० | अकतु अकतात् | अकताम् | अकन्तु |
| | अक " | अकतम् | अकत |
| | अकानि | अकाव | अकाम |
| ह्य० | आकत् | आकताम् | आकन् |
| | आकः | आकतम् | आकत |
| | आकम् | आकाव | आकाम |
| अ० | आकीत् | आकिष्टाम् | आकिषुः |
| | आकीः | आकिष्टम् | आकिष्ट |
| | आकिषम् | आकिष्व | आकिष्म |
| प० | आक | आकतुः | आकुः |
| | आकिथ | आकथुः | आक |
| | आक | आकिव | आकिम |
| आ० | अक्यात् | अक्यास्ताम् | अक्यासुः |
| | अक्याः | अक्यास्तम् | अक्यास्त |
| | अक्यासम् | अक्यास्व | अक्यास्म |
| श्व० | अकिता | अकितारौ | अकितारः |
| | अकितासि | अकितास्थः | अकितास्थ |
| | अकितास्मि | अकितास्वः | अकितास्मः |
| भ० | अकिष्यति | अकिष्यतः | अकिष्यन्ति |
| | अकिष्यसि | अकिष्यथः | अकिष्यथ |
| | अकिष्यामि | अकिष्यावः | अकिष्यामः |
| क्रि० | आकिष्यत् | आकिष्यताम् | आकिष्यन् |
| | आकिष्यः | आकिष्यतम् | आकिष्यत |
| | आकिष्यम् | आकिष्याव | आकिष्याम |

॥ अथ खान्ताः ॥

## 1021 कखे ( कख् ) हसने ॥

| | | | |
|---|---|---|---|
| व० | कखति | कखतः | कखन्ति |
| | कखसि | कखथः | कखथ |
| | कखामि | कखावः | कखामः |
| स० | कखेत् | कखेताम् | कखेयुः |
| | कखेः | कखेतम् | कखेत |
| | कखेयम् | कखेव | कखेम |
| प० | कखतु कखतात् | कखताम् | कखन्तु |
| | कख " | कखतम् | कखत |
| | कखानि | कखाव | कखाम |
| ह्य० | अकखत् | अकखताम् | अकखन् |
| | अकखः | अकखतम् | अकखत |
| | अकखम् | अकखाव | अकखाम |
| अ० | अकखीत् | अकखिष्टाम् | अकखिषुः |
| | अकखीः | अकखिष्टम् | अकखिष्ट |
| | अकखिषम् | अकखिष्व | अकखिष्म |
| प० | चकाख | चकखतुः | चकखुः |
| | चकखिथ | चकखथुः | चकख |
| | चकाख,चकख | चकखिव | चकखिम |
| आ० | कख्यात् | कख्यास्ताम् | कख्यासुः |
| | कख्याः | कख्यास्तम् | कख्यास्त |
| | कख्यासम् | कख्यास्व | कख्यास्म |
| श्व० | कखिता | कखितारौ | कखितारः |
| | कखितासि | कखितास्थः | कखितास्थ |
| | कखितास्मि | कखितास्वः | कखितास्मः |
| भ० | कखिष्यति | कखिष्यतः | कखिष्यन्ति |
| | कखिष्यसि | कखिष्यथः | कखिष्यथ |
| | कखिष्यामि | कखिष्यावः | कखिष्यामः |
| क्रि० | अकखिष्यत् | अकखिष्यताम् | अकखिष्यन् |
| | अकखिष्यः | अकखिष्यतम् | अकखिष्यत |
| | अकखिष्यम् | अकखिष्याव | अकखिष्याम |

## ॥ अथ गान्ता नव सेटश्च ॥

### 1022 अग ( अग् ) अकवत् ।

अक कुटिलायां गतौ पठितोऽयमपि तदर्थो लाघवार्थं तथा निर्दिश्यते ।

| | | | |
|---|---|---|---|
| व० | अगति | अगतः | अगन्ति |
| | अगसि | अगथः | अगथ |
| | अगामि | अगावः | अगामः |
| स० | अगेत् | अगेताम् | अगेयुः |
| | अगेः | अगेतम् | अगेत |
| | अगेयम् | अगेव | अगेम |
| प० | अगतु अगतात् | अगताम् | अगन्तु |
| | अग ,, | अगतम् | अगत |
| | अगानि | अगाव | अगाम |
| ह्य० | आगत् | आगताम् | आगन् |
| | आगः | आगतम् | आगत |
| | आगम् | आगाव | आगाम |
| अ० | आगीत् | आगिष्टाम् | आगिषुः |
| | आगीः | आगिष्टम् | आगिष्ट |
| | आगिषम् | आगिष्व | आगिष्म |
| प० | आग | आगतुः | आगुः |
| | आगिथ | आगथुः | आग |
| | आग, | आगिव | आगिम |
| आ० | अग्यात् | अग्यास्ताम् | अग्यासुः |
| | अग्याः | अग्यास्तम् | अग्यास्त |
| | अग्यासम् | अग्यास्व | अग्यास्म |
| श्व० | अगिता | अगितारौ | अगितारः |
| | अगितासि | अगितास्थः | अगितास्थ |
| | अगितास्मि | अगितास्वः | अगितास्मः |
| भ० | अगिष्यति | अगिष्यतः | अगिष्यन्ति |
| | अगिष्यसि | अगिष्यथः | अगिष्यथ |
| | अगिष्यामि | अगिष्यावः | अगिष्यामः |
| क्रि० | आगिष्यत् | आगिष्यताम् | आगिष्यन् |
| | आगिष्यः | आगिष्यतम् | आगिष्यत |
| | आगिष्यम् | आगिष्याव | आगिष्याम |

### 1023 रगे ( रग् ) शङ्कायाम् ।

| | | | |
|---|---|---|---|
| व० | रगति | रगतः | रगन्ति |
| | रगसि | रगथः | रगथ |
| | रगामि | रगावः | रगामः |
| स० | रगेत् | रगेताम् | रगेयुः |
| | रगेः | रगेतम् | रगेत |
| | रगेयम् | रगेव | रगेम |
| प० | रगतु रगतात् | रगताम् | रगन्तु |
| | रग ,, | रगतम् | रगत |
| | रगाणि | रगाव | रगाम |
| ह्य० | अरगत् | अरगताम् | अरगन् |
| | अरगः | अरगतम् | अरगत |
| | अरगम् | अरगाव | अरगाम |
| अ० | अरगीत् | अरगिष्टाम् | अरगिषुः |
| | अरगीः | अरगिष्टम् | अरगिष्ट |
| | अरगिषम् | अरगिष्व | अरगिष्म |
| प० | रराग | रेगतुः | रेगुः |
| | रेगिथ | रेगथुः | रेग |
| | रराग,ररग | रेगिव | रेगिम |
| आ० | रग्यात् | रग्यास्ताम् | रग्यासुः |
| | रग्याः | रग्यास्तम् | रग्यास्त |
| | रग्यासम् | रग्यास्व | रग्यास्म |
| श्व० | रगिता | रगितारौ | रगितारः |
| | रगितासि | रगितास्थः | रगितास्थ |
| | रगितास्मि | रगितास्वः | रगितास्मः |
| भ० | रगिष्यति | रगिष्यतः | रगिष्यन्ति |
| | रगिष्यसि | रगिष्यथः | रगिष्यथ |
| | रगिष्यामि | रगिष्यावः | रगिष्यामः |
| क्रि० | अरगिष्यत् | अरगिष्यताम् | अरगिष्यन् |
| | अरगिष्यः | अरगिष्यतम् | अरगिष्यत |
| | अरगिष्यम् | अरगिष्याव | अरगिष्याम |

रगण् आस्वादने इति पठिष्यमाणस्येऽपि अर्थविशेषे घटादिकार्यार्थं णिच् रहित-शब्प्रत्ययार्थं चेह पाठः ।

## 1024 लगे ( लग् ) सङ्गे।

| | | | |
|---|---|---|---|
| व० | लगति | लगतः | लगन्ति |
| | लगसि | लगथः | लगथ |
| | लगामि | लगावः | लगामः |
| स० | लगेत् | लगेताम् | लगेयुः |
| | लगेः | लगेतम् | लगेत |
| | लगेयम् | लगेव | लगेम |
| प० | लगतु लगतात् | लगताम् | लगन्तु |
| | लग ,, | लगतम् | लगत |
| | लगानि | लगाव | लगाम |
| ह्य० | अलगत् | अलगताम् | अलगन् |
| | अलगः | अलगतम् | अलगत |
| | अलगम् | अलगाव | अलगाम |
| अ० | अलगीत् | अलगिष्टाम् | अलगिषुः |
| | अलगीः | अलगिष्टम् | अलगिष्ट |
| | अलगिषम् | अलगिष्व | अलगिष्म |
| प० | ललाग | लेगतुः | लेगुः |
| | लेगिथ | लेगथुः | लेग |
| | ललाग,ललग | लेगिव | लेगिम |
| आ० | लग्यात् | लग्यास्ताम् | लग्यासुः |
| | लग्याः | लग्यास्तम् | लग्यास्त |
| | लग्यासम् | लग्यास्व | लग्यास्म |
| श्व० | लगिता | लगितारौ | लगितारः |
| | लगितासि | लगितास्थः | लगितास्थ |
| | लगितास्मि | लगितास्वः | लगितास्मः |
| भ० | लगिष्यति | लगिष्यतः | लगिष्यन्ति |
| | लगिष्यसि | लगिष्यथः | लगिष्यथ |
| | लगिष्यामि | लगिष्यावः | लगिष्यामः |
| क्रि० | अलगिष्यत् | अलगिष्यताम् | अलगिष्यन् |
| | अगिष्यः | अलगिष्यताम् | अलगिष्यत |
| | अलगिष्यम् | अलगिष्याव | अलगिष्याम |

लागण् आस्वादने इति पठिष्यमाणत्वेऽपि अर्थविशेषे घटादिकार्यार्थं णित् रहितश-ब्प्रत्ययार्थं चास्य पाठः।

## 1025 ह्वगे ( ह्वग् ) संवरणे।

संवरणमाच्छादनम्।

| | | | |
|---|---|---|---|
| व० | ह्वगति | ह्वगतः | ह्वगन्ति |
| | ह्वगसि | ह्वगथः | ह्वगथ |
| | ह्वगामि | ह्वगावः | ह्वगामः |
| स० | ह्वगेत् | ह्वगेताम् | ह्वगेयुः |
| | ह्वगेः | ह्वगेतम् | ह्वगेत |
| | ह्वगेयम् | ह्वगेव | ह्वगेम |
| प० | ह्वगतु ह्वगतात् | ह्वगताम् | ह्वगन्तु |
| | ह्वग ,, | ह्वगतम् | ह्वगत |
| | ह्वगानि | ह्वगाव | ह्वगाम |
| ह्य० | अह्वगत् | अह्वगताम् | अह्वगन् |
| | अह्वगः | अह्वगतम् | अह्वगत |
| | अह्वगम् | अह्वगाव | अह्वगाम |
| अ० | अह्वगीत् | अह्वगिष्टाम् | अह्वगिषुः |
| | अह्वगीः | अह्वगिष्टम् | अह्वगिष्ट |
| | अह्वगिषम् | अह्वगिष्व | अह्वगिष्म |
| प० | जह्वाग | जह्वगतुः | जह्वगुः |
| | जह्वगिथ | जह्वगथुः | जह्वग |
| | जह्वाग,जह्वग | जह्वगिव | जह्वगिम |
| आ० | ह्वग्यात् | ह्वग्यास्ताम् | ह्वग्यासुः |
| | ह्वग्याः | ह्वग्यास्तम् | ह्वग्यास्त |
| | ह्वग्यासम् | ह्वग्यास्व | ह्वग्यास्म |
| श्व० | ह्वगिता | ह्वगितारौ | ह्वगितारः |
| | ह्वगितासि | ह्वगितास्थः | ह्वगितास्थ |
| | ह्वगितास्मि | ह्वगितास्वः | ह्वगितास्मः |
| भ० | ह्वगिष्यति | ह्वगिष्यतः | ह्वगिष्यन्ति |
| | ह्वगिष्यसि | ह्वगिष्यथः | ह्वगिष्यथ |
| | ह्वगिष्यामि | ह्वगिष्यावः | ह्वगिष्यामः |
| क्रि० | अह्वगिष्यत् | अह्वगिष्यताम् | अह्वगिष्यन् |
| | अह्वगिष्यः | अह्वगिष्यतम् | अह्वगिष्यत |
| | अह्वगिष्यम् | अह्वगिष्याव | अह्वगिष्याम |

## 1026 ह्लगे ( ह्लग् ) संवरणे ।
### संवरणमाच्छादनम् ।

| | | | |
|---|---|---|---|
| व० | ह्लगति | ह्लगतः | ह्लगन्ति |
| | ह्लगसि | ह्लगथः | ह्लगथ |
| | ह्लगामि | ह्लगावः | ह्लगामः |
| स० | ह्लगेत् | ह्लगेताम् | ह्लगेयुः |
| | ह्लगेः | ह्लगेतम् | ह्लगेत |
| | ह्लगेयम् | ह्लगेव | ह्लगेम |
| प० | ह्लगतु ह्लगतात् | ह्लगताम् | ह्लगन्तु |
| | ह्लग ,, | ह्लगतम् | ह्लगत |
| | ह्लगानि | ह्लगाव | ह्लगाम |
| ह्य० | अह्लगत् | अह्लगताम् | अह्लगन् |
| | अह्लगः | अह्लगतम् | अह्लगत |
| | अह्लगम् | अह्लगाव | अह्लगाम |
| अ० | अह्लगीत् | अह्लगिष्टाम् | अह्लगिषुः |
| | अह्लगीः | अह्लगिष्टम् | अह्लगिष्ट |
| | अह्लगिषम् | अह्लगिष्व | अह्लगिष्म |
| प० | जह्लाग | जह्लगतुः | जह्लगुः |
| | जह्लगिथ | जह्लगथुः | जह्लग |
| | जह्लाग,जह्लग | जह्लगिव | जह्लगिम |
| आ० | ह्लग्यात् | ह्लग्यास्ताम् | ह्लग्यासुः |
| | ह्लग्याः | ह्लग्यास्तम् | ह्लग्यास्त |
| | ह्लग्यासम् | ह्लग्यास्व | ह्लग्यास्म |
| श्व० | ह्लगिता | ह्लगितारौ | ह्लगितारः |
| | ह्लगितासि | ह्लगितास्थः | ह्लगितास्थ |
| | ह्लगितास्मि | ह्लगितास्वः | ह्लगितास्मः |
| भ० | ह्लगिष्यति | ह्लगिष्यतः | ह्लगिष्यन्ति |
| | ह्लगिष्यसि | ह्लगिष्यथः | ह्लगिष्यथ |
| | ह्लगिष्यामि | ह्लगिष्यावः | ह्लगिष्यामः |
| क्रि० | अह्लगिष्यत् | अह्लगिष्यताम् | अह्लगिष्यन् |
| | अह्लगिष्यः | अह्लगिष्यतम् | अह्लगिष्यत |
| | अह्लगिष्यम् | अह्लगिष्याव | अह्लगिष्याम |

## 1027 षगे ( सग् ) संवरणे ।
### संवरणमाच्छादनम् ।

| | | | |
|---|---|---|---|
| व० | सगति | सगतः | सगन्ति |
| | सगसि | सगथः | सगथ |
| | सगामि | सगावः | सगामः |
| स० | सगेत् | सगेताम् | सगेयुः |
| | सगेः | सगेतम् | सगेत |
| | सगेयम् | सगेव | सगेम |
| प० | सगतु सगतात् | सगताम् | सगन्तु |
| | सग ,, | सगतम् | सगत |
| | सगानि | सगाव | सगाम |
| ह्य० | असगत् | असगताम् | असगन् |
| | असगः | असगतम् | असगत |
| | असगम् | असगाव | असगाम |
| अ० | असगीत् | असगिष्टाम् | असगिषुः |
| | असगीः | असगिष्टम् | असगिष्ट |
| | असगिषम् | असगिष्व | असगिष्म |
| प० | ससाग | सेगतुः | सेगुः |
| | सेगिथ | सेगथुः | सेग |
| | ससाग,ससग | सेगिव | सेगिम |
| आ० | सग्यात् | सग्यास्ताम् | सग्यासुः |
| | सग्याः | सग्यास्तम् | सग्यास्त |
| | सग्यासम् | सग्यास्व | सग्यास्म |
| श्व० | सगिता | सगितारौ | सगितारः |
| | सगितासि | सगितास्थः | सगितास्थ |
| | सगितास्मि | सगितास्वः | सगितास्मः |
| भ० | सगिष्यति | सगिष्यतः | सगिष्यन्ति |
| | सगिष्यसि | सगिष्यथः | सगिष्यथ |
| | सगिष्यामि | सगिष्यावः | सगिष्यामः |
| क्रि० | असगिष्यत् | असगिष्यताम् | असगिष्यन् |
| | असगिष्यः | असगिष्यताम् | असगिष्यत |
| | असगिष्यम् | असगिष्याव | असगिष्याम |

## 1029 छगे ( स्थग् ) संवरणे ।

संवरणमाच्छादनम् ।

व० स्थगति स्थगतः स्थगन्ति
स्थगसि स्थगथः स्थगथ
स्थगामि स्थगावः स्थगामः

स० स्थगेत् स्थगेताम् स्थगेयुः
स्थगेः स्थगेतम् स्थगेत
स्थगेयम् स्थगेव स्थगेम

प० स्थगतु स्थगतात् स्थगताम् स्थगन्तु
स्थग „ स्थगतम् स्थगत
स्थगानि स्थगाव स्थगाम

ह्य० अस्थगत् अस्थगताम् अस्थगन्
अस्थगः अस्थगतम् अस्थगत
अस्थगम् अस्थगाव अस्थगाम

अ० अस्थगीत् अस्थगिष्टाम् अस्थगिषुः
अस्थगीः अस्थगिष्टम् अस्थगिष्ट
अस्थगिषम् अस्थगिष्व अस्थगिष्म

प० तस्थाग तस्थगतुः तस्थगुः
तस्थगिथ तस्थगथुः तस्थग
तस्थाग,तस्थग तस्थगिव तस्थगिम

आ० स्थग्यात् स्थग्यास्ताम् स्थग्यासुः
स्थग्याः स्थग्यास्तम् स्थग्यास्त
स्थग्यासम् स्थग्यास्व स्थग्यास्म

श्व० स्थगिता स्थगितारौ स्थगितारः
स्थगितासि स्थगितास्थः स्थगितास्थ
स्थगितास्मि स्थगितास्वः स्थगितास्मः

भ० स्थगिष्यति स्थगिष्यतः स्थगिष्यन्ति
स्थगिष्यसि स्थगिष्यथः स्थगिष्यथ
स्थगिष्यामि स्थगिष्यावः स्थगिष्यामः

क्रि० अस्थगिष्यत् अस्थगिष्यताम् अस्थगिष्यन्
अस्थगिष्यः अस्थगिष्यतम् अस्थगिष्यत
अस्थगिष्यम् अस्थगिष्याव अस्थगिष्याम

## 1030 स्थगे ( स्थग् ) संवरणे ।

संवरणमाच्छादनम्
एतद्रूपाणि तु छगे संवरणे 1029 इति-वद्बोध्यानि,उभयपाठस्तु तिङ्गयिषति नि-स्थगयिषतीति षत्वविकल्पार्थः ।

॥ अथ टान्ताश्रयः सेटश्च ॥

## 1031 वट ( वट् ) परिभाषणे ।

वट वेष्टने इति पठितत्वेऽपि वटण् ग्रन्थे इति पठिष्यमाणत्वेऽपि अर्थविशेषे घटादि-कार्यार्थमस्य पाठः । एतद्रूपाणि च वट वे-ष्टने । 176 इतिवज्ज्ञेयानि

## 1032 भट ( भट् ) परिभाषणे ।

भट भृतौ इतिपठितत्वेऽपि
घटादिकार्यार्थमिह पाठः । एतद्रूपाणि च भट भृतौ 184 इतिवद्बोध्यानि

## 1033 णट [ नट् ] नतौ ।

नट नृत्तौ इति पठितत्वेऽपि
नटण् अवस्यन्दने इति पठिष्यमाणत्वेऽपि अर्थविशेषे घटादिकार्यार्थमिह पाठः । एतद्रूपाणि च नट नृत्तौ 187 इति वज्ज्ञेयानि

## ॥ अथ डान्तास्त्रयः सेटश्च ॥

### 1034 गड (गड्) सेचने।

गडति गडतः गडन्ति
गडसि गडथः गडथ
गडामि गडावः गडामः

स० गडेत् गडेताम् गडेयुः
गडेः गडेतम् गडेत
गडेयम् गडेव गडेम

प० गडतु गडतात् गडताम् गडन्तु
गड " गडतम् गडत
गडानि गडाव गडाम

ह्य० अगडत् अगडताम् अगडन्
अगडः अगडतम् अगडत
अगडम् अगडाव अगडाम

अ० अगाडीत् अगाडिष्टाम् अगाडिषुः
अगाडीः अगाडिष्टम् अगाडिष्ट
अगाडिषम् अगाडिष्व अगाडिष्म

अ० अगडीत्अगडिष्टाम्अगडिषुः इत्यादि।

प० जगाड जगडतुः जगडुः
जगडिथ जगडथुः जगड
जगाड जगड जगडिव जगडिम

आ० गड्यात् गड्यास्ताम् गड्यासुः
गड्याः गड्यास्तम् गड्यास्त
गड्यासम् गड्यास्व गड्यास्म

श्व० गडिता गडितारौ गडितारः
गडितासि गडितास्थः गडितास्थ
गडितास्मि गडितास्वः गडितास्मः

भ० गडिष्यति गडिष्यतः गडिष्यन्ति
गडिष्यसि गडिष्यथः गडिष्यथ
गडिष्यामि गडिष्यावः गडिष्यामः

क्रि० अगडिष्यत् अगडिष्यताम् अगडिष्यन्
अगडिष्यः अगडिष्यतम् अगडिष्यत
अगडिष्यम् अगडिष्याव अगडिष्याम

### डकारस्य लत्वे।

व० गलति गलतः गलन्ति
गलसि गलथः गलथ
गलामि गलावः गलामः

स० गलेत् गलेताम् गलेयुः
गलेः गलेतम् गलेत
गलेयम् गलेव गलेम

प० गलतु गलतात् गलताम् गलन्तु
गल " गलतम् गलत
गलानि गलाव गलाम

ह्य० अगलत् अगलताम् अगलन्
अगलः अगलतम् अगलत
अगलम् अगलाव अगलाम

अ० अगालीत् अगालिष्टाम् अगालिषुः
अगालीः अगालिष्टम् अगालिष्ट
अगालिषम् अगालिष्व अगालिष्म

प० जगाल जगलतुः जगलुः
जगलिथ जगलथुः जगल
जगाल-जगल जगलिव जगलिम

आ० गल्यात् गल्यास्ताम् गल्यासुः
गल्याः गल्यास्तम् गल्यास्त
गल्यासम् गल्यास्व गल्यास्म

श्व० गलिता गलितारौ गलितारः
गलितासि गलितास्थः गलितास्थ
गलितास्मि गलितास्वः गलितास्मः

भ० गलिष्यति गलिष्यतः गलिष्यन्ति
गलिष्यसि गलिष्यथः गलिष्यथ
गलिष्यामि गलिष्यावः गलिष्यामः

क्रि० अगलिष्यत् अगलिष्यताम् अगलिष्यन्
अगलिष्यः अगलिष्यतम् अगलिष्यत
अगलिष्यम् अगलिष्याव अगलिष्याम

1035 हेड ( हेड् ) वेष्टने ।

हेडृङ् अनादरे इति पठितत्वेऽपि अर्थविशेषे घटादिकार्यार्थं परस्मैपदार्थश्चात्र पाठः ॥

हेडति हेडतः हेडन्ति
हेडसि हेडथः हेडथ
हेडामि हेडावः हेडामः

स० हेडेत् हेडेताम् हेडेयुः
हेडेः हेडेतम् हेडेत
हेडेयम् हेडेव हेडेम

प० हेडतु हेडतात् हेडताम् हेडन्तु
हेड. " हेडतम् हेडत
हेडानि हेडाव हेडाम

ह्य० अहेडत् अहेडताम् अहेडन्
अहेडः अहेडतम् अहेडत
अहेडम् अहेडाव अहेडाम

अ० अहेडीत् अहेडिष्टाम् अहेडिषुः
अहेडीः अहेडिष्टम् अहेडिष्ट
अहेडिषम् अहेडिष्व अहेडिष्म

प० जिहेड जिहेडतुः जिहेडुः
जिहेडिथ जिहेडथुः जिहेड
जिहेड जिहेडिव जिहेडिम

आ० हेड्यात् हेड्यास्ताम् हेड्यासुः
हेड्याः हेड्यास्तम् हेड्यास्त
हेड्यासम् हेड्यास्व हेड्यास्म

श्व० हेडिता हेडितारौ हेडितारः
हेडितासि हेडितास्थः हेडितास्थ
हेडितास्मि हेडितास्वः हेडितास्मः

भ० हेडिष्यति हेडिष्यतः हेडिष्यन्ति
हेडिष्यसि हेडिष्यथः हेडिष्यथ
हेडिष्यामि हेडिष्यावः हेडिष्यामः

क्रि० अहेडिष्यत् अहेडिष्यताम् अहेडिष्यन्
अहेडिष्यः अहेडिष्यतम् अहेडिष्यत
अहेडिष्यम् अहेडिष्याव अहेडिष्याम

1036 लड (लड्) जिह्वोन्मथने ।

जिह्वाया उन्मथनं जिह्वोन्मथनम् ।

लडयति जिह्वां कुक्कुरः । लत्वे जिह्वाशतान्युल्ललयत्यभिक्ष्णम् । जिह्वोन्मथनयोरित्येके । तन्मते संग्रहार्थं जिह्वा च जिह्वाविषया क्रिया उन्मथनञ्चेति समाहारः । लडयति जिह्वाम् । ललयति दधि । लडण् उपसेवायाम् । लाडयति । लड विलासे इत्यस्यैवार्थविशेषे घटादिकार्यार्थमिह पाठः। लडयति जिह्वामित्यादिलक्ष्यानुरोधात् णिप्रत्यये एव जिह्वोन्मथनरूपार्थो भवति तेन जिह्वोन्मथनार्थस्यास्य रूपाणि लडयतीत्यादीनि वक्ष्यमाणानि ज्ञेयानि नतु लडतीत्यादीनि ।

## अथ णान्ताः षट् सेटश्च

### 1037 फण ( फण् ) गतौ ।

| | | |
|---|---|---|
| व० फणति | फणतः | फणन्ति |
| फणसि | फणथः | फणथ |
| फणामि | फणावः | फणामः |
| स० फणेत् | फणेताम् | फणेयुः |
| फणेः | फणेतम् | फणेत |
| फणेयम् | फणेव | फणेम |
| प० फणतु फणतात् | फणताम् | फणन्तु |
| फण ” | फणतम् | फणत |
| फणानि | फणाव | फणाम |
| ह्य० अफणत् | अफणताम् | अफणन् |
| अफणः | अफणतम् | अफणत |
| अफणम् | अफणाव | अफणाम |
| अ० अफणीत् | अफणिष्टाम् | अफणिषुः |
| अफणीः | अफणिष्टम् | अफणिष्ट |
| अफणिषम् | अफणिष्व | अफणिष्म |
| अ० अफाणीत् | अफाणिष्टाम् | अफाणिषुः |
| अफाणीः | अफाणिष्टम् | अफाणिष्ट |
| अफाणिषम् | अफाणिष्व | अफाणिष्म |
| प० पफाण | फेणतुः | फेणुः |
| फेणिथ | फेणथुः | फेण |
| पफाण,पफण | फेणिव | फेणिम |
| पफाण | पफणतुः | पफणुः |
| पफणिथ | पफणथुः | पफण |
| पफाण,पफण | पफणिव | पफणिम |
| आ० फण्यात् | फण्यास्ताम् | फण्यासुः |
| फण्याः | फण्यास्तम् | फण्यास्त |
| फण्यासम् | फण्यास्व | फण्यास्म |
| श्व० फणिता | फणितारौ | फणितारः |
| फणितासि | फणितास्थः | फणितास्थ |
| फणितास्मि | फणितास्वः | फणितास्मः |
| भ० फणिष्यति | फणिष्यतः | फणिष्यन्ति |
| फणिष्यसि | फणिष्यथः | फणिष्यथ |
| फणिष्यामि | फणिष्यावः | फणिष्यामः |
| क्रि० अफणिष्यत् | अफणिष्यताम् | अफणिष्यन् |
| अफणिष्यः | अफणिष्यतम् | अफणिष्यत |
| अफणिष्यम् | अफणिष्याव | अफणिष्याम |

1038 कण ( कण् ) गतौ । कण शब्दे इति पठित त्वेऽपि कणण् निमीलने इति पठिष्यमाणत्वेऽपि अर्थविशेषे घटादि कार्यार्थमिह पाठः। अस्य रूपाणि कण शब्दे 270 इति वज्ञेयानि।

1039 रण (रण्) गतौ । रण शब्दे इति पठितोऽपि अर्थ विशेषे घटादिकार्यार्थमिह पठित. रूपाणि चास्य रण शब्दे 260 इतिवज्ञेयानि

1040 चण् ( चण् ) हिंसादानयोश्च। हिंसायां दाने चकाराद्गतौ। चण शब्दे इतिपठितोऽपि अर्थविशेषे घटादिकार्यार्थमिह पठितः। एतद्रूपाणि चण शब्दे 272 इतिवज्ञेयानि।

## 1041 शण ( शण् ) दाने

| | | | |
|---|---|---|---|
| व० | शणति | शणतः | शणन्ति |
| | शणसि | शणथः | शणथ |
| | शणामि | शणावः | शणामः |
| स० | शणेत् | शणेताम् | शणेयुः |
| | शणेः | शणेतम् | शणेत |
| | शणेयम् | शणेव | शणेम |
| प० | शणतु शणतात् | शणताम् | शणन्तु |
| | शण ” | शणतम् | शणत |
| | शणानि | शणाव | शणाम |
| ह्य० | अशणत् | अशणताम् | अशणन् |
| | अशणः | अशणतम् | अशणत |
| | अशणम् | अशणाव | अशणाम |
| अ० | अशाणीत् | अशाणिष्टाम् | अशाणिषुः |
| | अशाणीः | अशाणिष्टम् | अशाणिष्ट |
| | अशाणिषम् | अशाणिष्व | अशाणिष्म |
| | अशणीत् | अशणिष्टाम् | अशणिषुः |
| | अशणीः | अशणिष्टम् | अशणिष्ट |
| | अशणिषम् | अशणिष्व | अशणिष्म |
| प० | शशाण | शेणतुः | शेणुः |
| | शेणिथ | शेणथुः | शेण |
| | शशाण शशण | शेणिव | शेणिम |
| आ० | शण्यात् | शण्यास्ताम् | शण्यासुः |
| | शण्याः | शण्यास्तम् | शण्यास्त |
| | शण्यासम् | शण्यास्व | शण्यास्म |
| श्व० | शणिता | शणितारौ | शणितारः |
| | शणितासि | शणितास्थः | शणितास्थ |
| | शणितास्मि | शणितास्वः | शणितास्मः |
| भ० | शणिष्यति | शणिष्यतः | शणिष्यन्ति |
| | शणिष्यसि | शणिष्यथः | शणिष्यथ |
| | शणिष्यामि | शणिष्यावः | शणिष्यामः |
| क्रि० | अशणिष्यत् | अशणिष्यताम् | अशणिष्यन् |
| | अशणिष्यः | अशणिष्यतम् | अशणिष्यत |
| | अशणिष्यम् | अशणिष्याव | अशणिष्याम |

## 1042 श्रण ( श्रण् ) दाने

| | | | |
|---|---|---|---|
| व० | श्रणति | श्रणतः | श्रणन्ति |
| | श्रणसि | श्रणथः | श्रणथ |
| | श्रणामि | श्रणावः | श्रणामः |
| स० | श्रणेत् | श्रणेताम् | श्रणेयुः |
| | श्रणेः | श्रणेतम् | श्रणेत |
| | श्रणेयम् | श्रणेव | श्रणेम |
| प० | श्रणतु श्रणतात् | श्रणताम् | श्रणन्तु |
| | श्रण ,, | श्रणतम् | श्रणत |
| | श्रणानि | श्रणाव | श्रणाम |
| ह्य० | अश्रणत् | अश्रणताम् | अश्रणन् |
| | अश्रणः | अश्रणतम् | अश्रणत |
| | अश्रणम् | अश्रणाव | अश्रणाम |
| अ० | अश्राणीत् | अश्राणिष्टाम् | अश्राणिषुः |
| | अश्राणीः | अश्राणिष्टम् | अश्राणिष्ट |
| | अश्राणिषम् | अश्राणिष्व | अश्राणिष्म |
| | अश्रणीत् | अश्रणिष्टाम् | अश्रणिषुः |
| | अश्रणीः | अश्रणिष्टम् | अश्रणिष्ट |
| | अश्रणिषम् | अश्रणिष्व | अश्रणिष्म |
| प० | शश्राण | शश्रणतुः | शश्रणुः |
| | शश्रणिथ | शश्रणथुः | शश्रण |
| | शश्राण शश्रण | शश्रणिव | शश्रणिम |
| आ० | श्रण्यात् | श्रण्यास्ताम् | श्रण्यासुः |
| | श्रण्याः | श्रण्यास्तम् | श्रण्यास्त |
| | श्रण्यासम् | श्रण्यास्व | श्रण्यास्म |
| श्व० | श्रणिता | श्रणितारौ | श्रणितारः |
| | श्रणितासि | श्रणितास्थः | श्रणितास्थ |
| | श्रणितास्मि | श्रणितास्वः | श्रणितास्मः |
| भ० | श्रणिष्यति | श्रणिष्यतः | श्रणिष्यन्ति |
| | श्रणिष्यसि | श्रणिष्यथः | श्रणिष्यथ |
| | श्रणिष्यामि | श्रणिष्यावः | श्रणिष्यामः |
| क्रि० | अश्रणिष्यत् | अश्रणिष्यताम् | अश्रणिष्यन् |
| | अश्रणिष्यः | अश्रणिष्यतम् | अश्रणिष्यत |
| | अश्रणिष्यम् | अश्रणिष्याव | अश्रणिष्याम |

॥ अथ थान्ताश्चत्वारः सेटश्च ॥

## 1043 स्नथ [ स्नथ् ] हिंसार्थः ।

व० स्नथति स्नथतः स्नथन्ति
स्नथसि स्नथथः स्नथथ
स्नथामि स्नथावः स्नथामः

स० स्नथेत स्नथेताम् स्नथेयुः
स्नथेः स्नथेतम् स्नथेत
स्नथेयम् स्नथेव स्नथेम

प० स्नथतु स्नथतात् स्नथताम् स्नथन्तु
स्नथ " स्नथतम् स्नथत
स्नथानि स्नथाव स्नथाम

ह्य० अस्नथत अस्नथताम अस्नथन
अस्नथः अस्नथतम् अस्नथत
अस्नथम् अस्नथाव अस्नथाम

अ० अस्नाथीत् अस्नाथिष्टाम् अस्नाथिषुः
अस्नाथीः अस्नाथिष्टम अस्नाथिष्ट
अस्नाथिषम अस्नाथिष्व अस्नाथिष्म
अ० अस्नथीत् अस्नथिष्टाम् अस्नथिषुः इत्यादि

प० सस्नाथ सस्नथतुः सस्नथुः
सस्नथिथ सस्नथथुः सस्नथ
सस्नाथ सस्नथ सस्नथिव सस्नथिम

आ० स्नथ्यात् स्नथ्यास्ताम् स्नथ्यासुः
स्नथ्याः स्नथ्यास्तम् स्नथ्यास्त
स्नथ्यासम् स्नथ्यास्व स्नथ्यास्म

श्व० स्नथिता स्नथितारौ स्नथितारः
स्नथितासि स्नथितास्थः स्नथितास्थ
स्नथितास्मि स्नथितास्वः स्नथितास्मः

भ० स्नथिष्यति स्नथिष्यतः स्नथिष्यन्ति
स्नथिष्यसि स्नथिष्यथः स्नथिष्यथ
स्नथिष्यामि स्नथिष्यावः स्नथिष्यामः

क्रि० अस्नथिष्यत् अस्नथिष्यताम् अस्नथिष्यन्
अस्नथिष्यः अस्नथिष्यतम् अस्नथिष्यत
अस्नथिष्यम् अस्नथिष्याव अस्नथिष्याम

## 1044 क्नथ ( क्नथ् ) हिंसार्थः ।

व० क्नथति क्नथतः क्नथन्ति
क्नथसि क्नथथः क्नथथ
क्नथामि क्नथावः क्नथामः

स० क्नथेत् क्नथेताम् क्नथेयुः
क्नथेः क्नथेतम् क्नथेत
क्नथेयम् क्नथेव क्नथेम

प० क्नथतु क्नथतात् क्नथताम् क्नथन्तु
क्नथ " क्नथतम् क्नथत
क्नथानि क्नथाव क्नथाम

ह्य० अक्नथत् अक्नथताम् अक्नथन्
अक्नथः अक्नथतम् अक्नथत
अक्नथम् अक्नथाव अक्नथाम

अ० अक्नाथीत् अक्नाथिष्टाम् अक्नाथिषुः
अक्नाथीः अक्नाथिष्टम् अक्नाथिष्ट
अक्नाथिषम् अक्नाथिष्व अक्नाथिष्म
अ० अक्नथीत् अक्नथिष्टाम् अक्नथिषुः
अक्नथीः अक्नथिष्टम् अक्नथिष्ट
अक्नथिषम् अक्नथिष्व अक्नथिष्म

प० चक्नाथ चक्नथतुः चक्नथुः
चक्नथिथ चक्नथथुः चक्नथ
चक्नाथ-चक्नथ चक्नथिव चक्नथिम

आ० क्नथ्यात् क्नथ्यास्ताम् क्नथ्यासुः
क्नथ्याः क्नथ्यास्तम् क्नथ्यास्त
क्नथ्यासम् क्नथ्यास्व क्नथ्यास्म

श्व० क्नथिता क्नथितारौ क्नथितारः
क्नथितासि क्नथितास्थः क्नथितास्थ
क्नथितास्मि क्नथितास्वः क्नथितास्मः

भ० क्नथिष्यति क्नथिष्यतः क्नथिष्यन्ति
क्नथिष्यसि क्नथिष्यथः क्नथिष्यथ
क्नथिष्यामि क्नथिष्यावः क्नथिष्यामः

क्रि० अक्नथिष्यत् अक्नथिष्यताम् अक्नथिष्यन्
अक्नथिष्यः अक्नथिष्यतम् अक्नथिष्यत
अक्नथिष्यम् अक्नथिष्याव अक्नथिष्याम

### 1045 क्रथ ( क्रथ् ) हिंसायाम्।

| | | | |
|---|---|---|---|
| व० | क्रथति | क्रथतः | क्रथन्ति |
| | क्रथसि | क्रथथः | क्रथथ |
| | क्रथामि | क्रथावः | क्रथामः |
| स० | क्रथेत् | क्रथेताम् | क्रथेयुः |
| | क्रथेः | क्रथेतम् | क्रथेत |
| | क्रथेयम् | क्रथेव | क्रथेम |
| प० | क्रथतु क्रथतात् | क्रथताम् | क्रथन्तु |
| | क्रथ " | क्रथतम् | क्रथत |
| | क्रथानि | क्रथाव | क्रथाम |
| ह्य० | अक्रथत् | अक्रथताम् | अक्रथन् |
| | अक्रथः | अक्रथतम् | अक्रथत |
| | अक्रथम् | अक्रथाव | अक्रथाम |
| अ० | अक्राथीत् | अक्राथिष्टाम् | अक्राथिषुः |
| | अक्राथीः | अक्राथिष्टम् | अक्राथिष्ट |
| | अक्राथिषम् | अक्राथिष्व | अक्राथिष्म |
| अ० | अक्रथीत् | अक्रथिष्टाम् | अक्रथिषुः इत्यादि |
| प० | चक्राथ | चक्रथतुः | चक्रथुः |
| | चक्रथिथ | चक्रथथुः | चक्रथ |
| | चक्राथ चक्रथ | चक्रथिव | चक्रथिम |
| आ० | क्रथ्यात् | क्रथ्यास्ताम् | क्रथ्यासुः |
| | क्रथ्याः | क्रथ्यास्तम् | क्रथ्यास्त |
| | क्रथ्यासम् | क्रथ्यास्व | क्रथ्यास्म |
| श्व० | क्रथिता | क्रथितारौ | क्रथितारः |
| | क्रथितासि | क्रथितास्थः | क्रथितास्थ |
| | क्रथितास्मि | क्रथितास्वः | क्रथितास्मः |
| भ० | क्रथिष्यति | क्रथिष्यतः | क्रथिष्यन्ति |
| | क्रथिष्यसि | क्रथिष्यथः | क्रथिष्यथ |
| | क्रथिष्यामि | क्रथिष्यावः | क्रथिष्यामः |
| क्रि० | अक्रथिष्यत् | अक्रथिष्यताम् | अक्रथिष्यन् |
| | अक्रथिष्यः | अक्रथिष्यतम् | अक्रथिष्यत |
| | अक्रथिष्यम् | अक्रथिष्याव | अक्रथिष्याम |

क्रथण् हिंसायामिति पठिष्यमाणत्वेऽपि घटादिकार्यार्थं णिच् रहित शप्प्रत्ययार्थं चात्रपाठः

### 1046 क्लथ [ क्लथ् ] हिंसार्थः।

| | | | |
|---|---|---|---|
| व० | क्लथति | क्लथतः | क्लथन्ति |
| | क्लथसि | क्लथथः | क्लथथ |
| | क्लथामि | क्लथावः | क्लथामः |
| स० | क्लथेत् | क्लथेताम् | क्लथेयुः |
| | क्लथेः | क्लथेतम् | क्लथेत |
| | क्लथेयम् | क्लथेव | क्लथेम |
| प० | क्लथतु क्लथतात् | क्लथताम् | क्लथन्तु |
| | क्लथ " | क्लथतम् | क्लथत |
| | क्लथानि | क्लथाव | क्लथाम |
| ह्य० | अक्लथत् | अक्लथताम् | अक्लथन् |
| | अक्लथः | अक्लथतम् | अक्लथत |
| | अक्लथम् | अक्लथाव | अक्लथाम |
| अ० | अक्लाथीत् | अक्लाथिष्टाम् | अक्लाथिषुः |
| | अक्लाथीः | अक्लाथिष्टम् | अक्लाथिष्ट |
| | अक्लाथिषम् | अक्लाथिष्व | अक्लाथिष्म |
| अ० | अक्लथीत् | अक्लथिष्टाम् | अक्लथिषुः |
| | अक्लथीः | अक्लथिष्टम् | अक्लथिष्ट |
| | अक्लथिषम् | अक्लथिष्व | अक्लथिष्म |
| प० | चक्लाथ | चक्लथतुः | चक्लथुः |
| | चक्लथिथ | चक्लथथुः | चक्लथ |
| | चक्लाथ-चक्लथ | चक्लथिव | चक्लथिम |
| आ० | क्लथ्यात् | क्लथ्यास्ताम् | क्लथ्यासुः |
| | क्लथ्याः | क्लथ्यास्तम् | क्लथ्यास्त |
| | क्लथ्यासम् | क्लथ्यास्व | क्लथ्यास्म |
| श्व० | क्लथिता | क्लथितारौ | क्लथितारः |
| | क्लथितासि | क्लथितास्थः | क्लथितास्थ |
| | क्लथितास्मि | क्लथितास्वः | क्लथितास्मः |
| भ० | क्लथिष्यति | क्लथिष्यतः | क्लथिष्यन्ति |
| | क्लथिष्यसि | क्लथिष्यथः | क्लथिष्यथ |
| | क्लथिष्यामि | क्लथिष्यावः | क्लथिष्यामः |
| क्रि० | अक्लथिष्यत् | अक्लथिष्यताम् | अक्लथिष्यन् |
| | अक्लथिष्यः | अक्लथिष्यतम् | अक्लथिष्यत |
| | अक्लथिष्यम् | अक्लथिष्याव | अक्लथिष्याम |

## अथ दान्तौ सेटौ च।

### 1047 छद ( छद् ) ऊर्जने।

ऊर्जनं प्राणनं बलनञ्च।

छदण् संवरणे इति पठिष्यमाणोऽप्यूर्जने घटादिकार्यार्थमिह पठितः। छदयत्यग्निः स्वार्थे णिच्। छादयन्तं प्रयुङ्क्ते इति णिग् वा। छदयत्यग्निरित्यादि लक्ष्यानुरोधात् णिप्रत्यये एव ऊर्जनार्थो भवति तेन ऊर्जनार्थस्यास्य रूपाणि छदयतीत्यादीनि वक्ष्यमाणानि नतु छदतीत्यादीनि।

### 1048 मदै [मद्] हर्षग्लपनयोः।

मदैच् हर्षे इत्ययमनयोरर्थयोर्घटादिकार्यार्थमिह पठितः। एतद्रूपाणि च हर्षार्थे मदैच् हर्षे इतिवज्ज्ञेयानि ग्लपनार्थे तु मदतीत्यादीनि।

### 1049 ष्टन ( स्तन् ) शब्दे।

एतद्रूपाणि च स्तन शब्दे 323 इतिवज्ज्ञेयानि षोपदेशत्वात्, तिष्टनयिषति

### 1050 स्तन ( स्तन् ) शब्दे।

स्तन शब्दे इति पठितत्वेऽपि स्तनण गर्जे इति पठिष्यमाणत्वेऽपि घटादिकार्यार्थमस्य पाठः। एतद्रूपाणि च स्तन शब्दे 323 इतिवज्ज्ञेयानि। अषोपदेशत्वात्, तिस्तनयिषति।

### 1051 ध्वन ( ध्वन् ) शब्दे।

ध्वन शब्दे इति पठितत्वेऽपि ध्वनण शब्दे इति पठिष्यमाणत्वेऽपि घटादिकार्यार्थमिह पाठः। रूपाणि चास्य ध्वन शब्दे 325 इतिवज्ज्ञेयानि।

### 1052 स्वन ( स्वन् ) अवतंसे।

पूर्वपठितस्यापि घटादिकार्यार्थमिह पाठः। एतद्रूपाणि च स्वन शब्दे 327 इतिवज्ज्ञेयानि।

### 1053 चन ( चन् ) हिंसायाम्।

पूर्वपठितस्यापि घटादिकार्यार्थमर्थविशेषे पाठः। चन शब्दे 326 इतिवद्रूपाणि

## अथ रान्तः सेट् च

### 1054 ज्वर [ ज्वर् ) रोगे।

| | | | |
|---|---|---|---|
| व० | ज्वरति | ज्वरतः | ज्वरन्ति |
| | ज्वरसि | ज्वरथः | ज्वरथ |
| | ज्वरामि | ज्वरावः | ज्वरामः |
| स० | ज्वरेत् | ज्वरेताम् | ज्वरेयुः |
| | ज्वरेः | ज्वरेतम् | ज्वरेत |
| | ज्वरेयम् | ज्वरेव | ज्वरेम |
| प० | ज्वरतु ज्वरतात् | ज्वरताम् | ज्वरन्तु |
| | ज्वर ,, | ज्वरतम् | ज्वरत |
| | ज्वराणि | ज्वराव | ज्वराम |
| ह्य० | अज्वरत् | अज्वरताम् | अज्वरन् |
| | अज्वरः | अज्वरतम् | अज्वरत |
| | अज्वरम् | अज्वराव | अज्वराम |
| अ० | अज्वारीत् | अज्वारिष्टाम् | अज्वारिषुः |
| | अज्वारीः | अज्वारिष्टम् | अज्वारिष्ट |
| | अज्वारिषम् | अज्वारिष्व | अज्वारिष्म |
| प० | जज्वार | जज्वरतुः | जज्वरुः |
| | जज्वरिथ | जज्वरथुः | जज्वर |
| | जज्वार,जज्वर | जज्वरिव | जज्वरिम |
| आ० | ज्वर्यात् | ज्वर्यास्ताम् | ज्वर्यासुः |
| | ज्वर्याः | ज्वर्यास्तम् | ज्वर्यास्त |
| | ज्वर्यासम् | ज्वर्यास्व | ज्वर्यास्म |
| श्व० | ज्वरिता | ज्वरितारौ | ज्वरितारः |
| | ज्वरितासि | ज्वरितास्थः | ज्वरितास्थ |
| | ज्वरितास्मि | ज्वरितास्वः | ज्वरितास्मः |
| भ० | ज्वरिष्यति | ज्वरिष्यतः | ज्वरिष्यन्ति |
| | ज्वरिष्यसि | ज्वरिष्यथः | ज्वरिष्यथ |
| | ज्वरिष्यामि | ज्वरिष्यावः | ज्वरिष्यामः |
| क्रि० | अज्वरिष्यत् | अज्वरिष्यताम् | अज्वरिष्यन् |
| | अज्वरिष्यः | अज्वरिष्यतम् | अज्वरिष्यत |
| | अज्वरिष्यम् | अज्वरिष्याव | अज्वरिष्याम |

**1055** चल ( चल् ) कम्पने । चल कम्पने इति पठितस्येऽपि चलन विचलने इति चलण् भृतौ इति च पठिष्यमाणस्येऽपि घटादिकायामस्येह पाठः। रूपाणि चास्य चल कम्पने 972 इतिवज्ज्ञेयानि।

### 1056 ह्वल ( ह्वल् ) चलने ।

| | | | |
|---|---|---|---|
| व० | ह्वलति | ह्वलतः | ह्वलन्ति |
| | ह्वलसि | ह्वलथः | ह्वलथ |
| | ह्वलामि | ह्वलावः | ह्वलामः |
| स० | ह्वलेत् | ह्वलेताम् | ह्वलेयुः |
| | ह्वलेः | ह्वलेतम् | ह्वलेत |
| | ह्वलेयम् | ह्वलेव | ह्वलेम |
| प० | ह्वलतु ह्वलतात् | ह्वलताम् | ह्वलन्तु |
| | ह्वल ,, | ह्वलतम् | ह्वलत |
| | ह्वलानि | ह्वलाव | ह्वलाम |
| ह्य० | अह्वलत् | अह्वलताम् | अह्वलन् |
| | अह्वलः | अह्वलतम् | अह्वलत |
| | अह्वलम् | अह्वलाव | अह्वलाम |
| अ० | अह्वालीत् | अह्वालिष्टाम् | अह्वालिषुः |
| | अह्वालीः | अह्वालिष्टम् | अह्वालिष्ट |
| | अह्वालिषम् | अह्वालिष्व | अह्वालिष्म |
| प० | जह्वाल | जह्वलतुः | जह्वलुः |
| | जह्वलिथ | जह्वलथुः | जह्वल |
| | जह्वाल-जह्वल | जह्वलिव | जह्वलिम |
| आ० | ह्वल्यात् | ह्वल्यास्ताम् | ह्वल्यासुः |
| | ह्वल्याः | ह्वल्यास्तम् | ह्वल्यास्त |
| | ह्वल्यासम् | ह्वल्यास्व | ह्वल्यास्म |
| श्व० | ह्वलिता | ह्वलितारौ | ह्वलितारः |
| | ह्वलितासि | ह्वलितास्थः | ह्वलितास्थ |
| | ह्वलितास्मि | ह्वलितास्वः | ह्वलितास्मः |
| भ० | ह्वलिष्यति | ह्वलिष्यतः | ह्वलिष्यन्ति |
| | ह्वलिष्यसि | ह्वलिष्यथः | ह्वलिष्यथ |
| | ह्वलिष्यामि | ह्वलिष्यावः | ह्वलिष्यामः |
| क्रि० | अह्वलिष्यत् | अह्वलिष्यताम् | अह्वलिष्यन् |
| | अह्वलिष्यः | अह्वलिष्यतम् | अह्वलिष्यत |
| | अह्वलिष्यम् | अह्वलिष्याव | अह्वलिष्याम |

**1057 ह्मल ( ह्मलॅ ) चलने ।**

व० ह्मलति ह्मलतः ह्मलन्ति
ह्मलसि ह्मलथः ह्मलथ
ह्मलामि ह्मलावः ह्मलामः

स० ह्मलेत् ह्मलेताम् ह्मलेयुः
ह्मलेः ह्मलेतम् ह्मलेत
ह्मलेयम् ह्मलेव ह्मलेम

प० ह्मलतु ह्मलतात् ह्मलताम् ह्मलन्तु
ह्मल ,, ह्मलतम् ह्मलत
ह्मलानि ह्मलाव ह्मलाम

ह्य० अह्मलत् अह्मलताम् अह्मलन्
अह्मलः अह्मलतम् अह्मलत
अह्मलम अह्मलाव अह्मलाम

अह्मालीत् अह्मालिष्टाम् अह्मालिषुः
अह्मालीः अह्मालिष्टम् अह्मालिष्ट
अह्मालिषम अह्मालिष्व अह्मालिष्म

प० जह्माल जह्मलतुः जह्मलुः
जह्मलिथ जह्मलथुः जह्मल
जह्माल, जह्मल जह्मलिव जह्मलिम

आ० ह्मल्यात् ह्मल्यास्ताम् ह्मल्यासुः
ह्मल्याः ह्मल्यास्तम् ह्मल्यास्त
ह्मल्यासम् ह्मल्यास्व ह्मल्यास्म

श्व० ह्मलिता ह्मलितारौ ह्मलितारः
ह्मलितासि ह्मलितास्थः ह्मलितास्थ
ह्मलितास्मि ह्मलितास्वः ह्मलितास्मः

भ० ह्मलिष्यति ह्मलिष्यतः ह्मलिष्यन्ति
ह्मलिष्यसि ह्मलिष्यथः ह्मलिष्यथ
ह्मलिष्यामि ह्मलिष्यावः ह्मलिष्यामः

क्रि० अह्मलिष्यत् अह्मलिष्यताम् अह्मलिष्यन्
अह्मलिष्यः अह्मलिष्यतम् अह्मलिष्यत
अह्मलिष्यम् अह्मलिष्याव अह्मलिष्याम

**1053 ज्वल (ज्वलॅ) दीप्तौ** । चकाराऽचलने ज्वलादौ पठितोऽप्ययं घटादिकार्यार्थमिहाधीतः। एतद्रूपाणि च ज्वल दीप्तौ 960 इतिवज्ज्ञेयानि । केचित्तु ह्वलि-ह्मलिस्खलिक्षपित्रपीणामपि घटादित्वमिच्छन्ति । तन्मते ह्वलयति स्खलयति क्षपयति त्रपयतीत्यपि भवति ।

श्रीमत्तपोगणगगनाङ्गणगगनमणि सार्वसार्वज्ञशासनसार्वभौम - तीर्थरक्षण - परायण--विद्यापीठाद्विप्रस्थानपञ्चकसमाराधक-संविग्नशाखीय-आचार्य-चूडामणिअखण्डविजयश्रीमद्गुरुराजश्रीविजयनेमिसूरीश्वरचरणेन्दिरा-मन्दिरेन्दिन्दिरायमाणान्तिषन्मुनिलावण्यविजयविरचिते धातु-रत्नाकरे औत्सर्गिकशब्विकरणो निरनुबन्धो भ्वादिगणः सम्पूर्णतामुपगतः ॥

## ॥ अथ अदादिः ॥

लुहाविकरणेषु वर्णक्रमेण धातुषु पठितेषु पूर्वाचार्य प्रसिद्ध्यनुसरणेनादेरादावुपन्यासः

### 1059 अदंक् ( अद् ) भक्षणे ।

व० अत्ति अत्तः अदन्ति
अत्सि अत्थः अत्थ
अद्मि अद्वः अद्मः
स० अद्यात् अद्याताम् अद्युः
अद्याः अद्यातम् अद्यात
अद्याम् अद्याव अद्याम
प० अत्तु अत्तात् अत्ताम् अदन्तु
अद्धि " अत्तम् अत्त
अदानि अदाव अदाम
ह्य० आदत् आत्ताम् आदन्
आदः आत्तम् आत्त
आदम् आद्व आद्म
अ० अघसत् अघसताम् अघसन्
अघसः अघसतम् अघसत
अघसम् अघसाव अघसाम
प० जघास जक्षतुः जक्षुः
जघसिथ जक्षथुः जक्ष
जघास, जघस जक्षिव जक्षिम
आद आदतुः आदुः
आदिथ आदथुः आद
आद आदिव आदिम
आ० अद्यात् अद्यास्ताम् अद्यासुः
अद्याः अद्यास्तम् अद्यास्त
अद्यासम् अद्यास्व अद्यास्म
श्व० अत्ता अत्तारौ अत्तारः
अत्तासि अत्तास्थः अत्तास्थ
अत्तास्मि अत्तास्वः अत्तास्मः
भ० अत्स्यति अत्स्यतः अत्स्यन्ति
अत्स्यसि अत्स्यथः अत्स्यथ
अत्स्यामि अत्स्यावः अत्स्यामः
क्रि० आत्स्यत् आत्स्यताम् आत्स्यन्
आत्स्यः आत्स्यतम् आत्स्यत
आत्स्यम् आत्स्याव आत्स्याम

## ॥ अथादन्ताश्चतुर्दशानिटश्च ॥

### 1060 प्सांक् ( प्सा ) भक्षणे ।

व० प्साति प्सातः प्सान्ति
प्सासि प्साथः प्साथ
प्सामि प्सावः प्सामः
स० प्सायात् प्सायाताम् प्सायुः
प्सायाः प्सायातम् प्सायात
प्सायाम् प्सायाव प्सायाम
प० प्सातु प्सातात् प्साताम् प्सान्तु
प्साहि " प्सातम् प्सात
प्सानि प्साव प्साम
ह्य० अप्सात् अप्साताम् अप्सुः अप्सान्
अप्साः अप्सातम् अप्सात
अप्साम् अप्साव अप्साम
अ० अप्सासीत् अप्सासिष्टाम् अप्सासिषुः
अप्सासीः अप्सासिष्टम् अप्सासिष्ट
अप्सासिषम् अप्सासिष्व अप्सासिष्म
प० पप्सौ पप्सतुः पप्सुः
पप्सिथ पप्साथ पप्सथुः पप्स
पप्सौ पप्सिव पप्सिम
आ० प्सेयात् प्सेयास्ताम् प्सेयासुः
प्सेयाः प्सेयास्तम् प्सेयास्त
प्सेयासम् प्सेयास्व प्सेयास्म
प्सायात् प्सायास्ताम् प्सायासुः
प्सायाः प्सायास्तम् प्सायास्त
प्सायासम् प्सायास्व प्सायास्म
श्व० प्साता प्सातारौ प्सातारः
प्सातासि प्सातास्थः प्सातास्थ
प्सातास्मि प्सातास्वः प्सातास्मः
भ० प्सास्यति प्सास्यतः प्सास्यन्ति
प्सास्यसि प्सास्यथः प्सास्यथ
प्सास्यामि प्सास्यावः प्सास्यामः
क्रि० अप्सास्यत् अप्सास्यताम् अप्सास्यन्
अप्सास्यः अप्सास्यतम् अप्सास्यत
अप्सास्यम् अप्सास्याव अप्सास्याम

## 2044 सपर ( सपर ) पूजायाम्

व० सपर्यति सपर्यतः सपर्यन्ति
सपर्यसि सपर्यथः सपर्यथ
सपर्यामि सपर्यावः सपर्यामः

स० सपर्येत् सपर्येताम् सपर्येयुः
सपर्येः सपर्येतम् सपर्येत
सपर्येयम् सपर्येव सपर्येम

प० सपर्यतु सपर्यतात् सपर्यताम् सपर्यन्तु
सपर्य ,, सपर्यतम् सपर्यत
सपर्याणि सपर्याव सपर्याम

ह्य० असपर्यत् असपर्यताम् असपर्यन्
असपर्यः असपर्यतम् असपर्यत
असपर्यम् असपर्याव असपर्याम

अ० असपरीत् असपरिष्टाम् असपरिषुः
असपरीः असपरिष्टम् असपरिष्ट
असपरिषम् असपरिष्व असपरिष्म

प० सपराञ्चकार सपराञ्चक्रतुः सपराञ्चक्रुः
सपराञ्चकर्थ सपराञ्चक्रथुः सपराञ्चक्र
सपराञ्चकार चकर सपराञ्चकृव सपराञ्चकृम
सपराम्बभूव । सपरामास

आ० सपर्यात् सपर्यास्ताम् सपर्यासुः
सपर्याः सपर्यास्तम् सपर्यास्त
सपर्यासम् सपर्यास्व सपर्यास्म

श्व० सपरिता सपरितारौ सपरितारः
सपरितासि सपरितास्थः सपरितास्थ
सपरितास्मि सपरितास्वः सपरितास्मः

भ० सपरिष्यति सपरिष्यतः सपरिष्यन्ति
सपरिष्यसि सपरिष्यथः सपरिष्यथ
सपरिष्यामि सपरिष्यावः सपरिष्यामः

क्रि० असपरिष्यत् असपरिष्यताम् असपरिष्यन्
असपरिष्यः असपरिष्यतम् असपरिष्यत
असपरिष्यम् असपरिष्याव असपरिष्याम

## 2045 समर ( समर ) युद्धे

व० समर्यति समर्यतः समर्यन्ति
समर्यसि समर्यथः समर्यथ
समर्यामि समर्यावः समर्यामः

स० समर्येत् समर्येताम् समर्येयुः
समर्येः समर्येतम् समर्येत
समर्येयम् समर्येव समर्येम

प० समर्यतु समर्यतात् समर्यताम् समर्यन्तु
समर्य ,, समर्यतम् समर्यत
समर्याणि समर्याव समर्याम

ह्य० असमर्यत् असमर्यताम् असमर्यन्
असमर्यः असमर्यतम् असमर्यत
असमर्यम् असमर्याव असमर्याम

अ० असमरीत् असमरिष्टाम् असमरिषुः
असमरीः असमरिष्टम् असमरिष्ट
असमरिषम् असमरिष्व असमरिष्म

प० समराञ्चकार समराञ्चक्रतुः समराञ्चक्रुः
समराञ्चकर्थ समराञ्चक्रथुः समराञ्चक्र
समराञ्चकार चकर समराञ्चकृव समराञ्चकृम
समराम्बभूव । समरामास

आ० समर्यात् समर्यास्ताम् समर्यासुः
समर्याः समर्यास्तम् समर्यास्त
समर्यासम् समर्यास्व समर्यास्म

श्व० समरिता समरितारौ समरितारः
समरितासि समरितास्थः समरितास्थ
समरितास्मि समरितास्वः समरितास्मः

भ० समरिष्यति समरिष्यतः समरिष्यन्ति
समरिष्यसि समरिष्यथः समरिष्यथ
समरिष्यामि समरिष्यावः समरिष्यामः

क्रि० असमरिष्यत् असमरिष्यताम् असमरिष्यन्
असमरिष्यः असमरिष्यतम् असमरिष्यत
असमरिष्यम् असमरिष्याव असमरिष्याम

इति कण्ड्वादयः

२०४६ अन्दोलण् २०४७ प्रेङ्खोलण् अन्दोलने २०४८ वीजण् वीजने । एते त्रयोऽप्यदन्ताः । बहुलवचनात्स्वार्थे णिचि अन्दोलयति, अन्दोलयेत्, अन्दोलयतु, आन्दोलयत्, आन्दुदोलत्, अन्दोलयाञ्चकार अन्दोलयाम्बभूव, आन्दोलयामास, अन्दोल्यात्, अन्दोलयिता, अन्दोलयिष्यति, आन्दोलयिष्यत् । प्रेङ्खोलयति, प्रेङ्खोलयेत्, प्रेङ्खोलयतु, अप्रेङ्खोलयत्, अपिप्रेङ्खोलत्, प्रेङ्खोलयाञ्चकार, प्रेङ्खोलयाम्बभूव, प्रेङ्खोलयामास प्रेङ्खोल्यात् प्रेङ्खोलयिता प्रेङ्खोलयिष्यति, अप्रेङ्खोलयिष्यत् । वीजयति, वीजयेत्, वीजयतु अवीजयत् । अविवीजत् वीजयाञ्चकार, वीजयाम्बभूव वीजयामास वीज्यात्, वीजयिता, वीजयिष्यति अवीजयिष्यत् ॥

२०४९ रिखिर्लिखेः समानार्थः । रेखति चित्रकृत् । अरेखीत् ।

२०५० लुल कम्पने । लोलति । अलोलीत् ॥

२०५१ चुलुम्प-चुलुम्पति चुलुम्पेत्, चुलुम्पतु, अचुलुम्पत्, अचुलुम्पीत्, चुलुम्पाञ्चकार, चुलुम्पाम्बभूव, चुलुम्पामास, चुलुम्प्यात्, चुलुम्पिता, चुलुम्पिष्यति अचुलुम्पिष्यत् ।

॥ इतिश्रीमत्तपोगणगगनाङ्गणगगनमणि–सार्वसार्वज्ञशासनसार्वभौम–तीर्थरक्षणपरायण–विद्यापीठादिप्रस्थानपञ्चकसमाराधक–संविग्नशाखीय–आचार्यचूडामणि अखण्डविजय श्रीमद्गुरुराज विजयनेमिसूरीश्वरचरणेन्दिरामन्दिरेन्दिन्दिरायमाणान्तिषन्मुनि लावण्यविजय विरचिते धातुरत्नाकरे नवगणातिरिक्तलौकिकसौत्रवाक्यकरणीयधातूनां रूपाणि समाप्तानि ॥

# ॥ सेट् अनिट् कारिकाः ॥

यद्यपि धातुपाठेष्वेव सेट्त्वानिट्त्वज्ञापकानि अनुबन्धविशेषरूपाणि चिह्नानि सङ्केतानि, तथापि सामान्यतया तत्स्वरूपावगतये शिष्यबुद्धिवैशद्यकारिकाः कारिकाः पूर्वाचार्यैयाः प्रतिपाद्यन्ते विव्रियन्ते च ।

अथ सेट्त्वमनिट्त्वञ्च किं नामेति चेदुच्यते। इटा टकारस्यानुबन्धत्वाद् इकारेण सह वर्त्तते इति सेट् तस्य भावः सेट्त्वम् , न विद्यते इट् इकारो यस्य सोऽनिट् तस्य भावोऽनिट्त्वम् ।

अत्रायं निष्कर्षः—येभ्यो धातुभ्यः परतो विधीयमानाः क्त्विसंज्ञकभिन्नत्रोणादिभिन्नसकारादितकारादिप्रत्यया विशेषविधानं विहायादौ इकाररूपमिडागमं नित्यं गृह्णन्ति ते सेटः। ये न गृह्णन्ति तेऽनिटः। सेट्त्वानिट्त्वे च यद्यपि स्ताद्यशितोऽत्रोणादेरिति प्रत्ययस्यादौ विधानात्प्रत्ययस्यैव तथाप्युपचारेण धातोरपि। इह तावद्धातवो द्विधा, स्वरान्ता व्यञ्जनान्ताश्चेति। तत्र सूचिकटाहन्यायेनाल्पत्वादौ स्वरान्तानां सेट्त्वानिट्त्वे विवेच्य तदनु व्यञ्जनान्तानां विवेचयति, तत्रापि ग्रन्थलाघवार्थं स्वरान्तेषु सेटधातून् निर्दिश्य तद्व्यतिरेकेणानिटो व्यञ्जनान्तेषु अनिट्धातून् निर्दिश्य तद्व्यतिरेकेण सेटश्च दर्शयति ।

> श्विश्रिडीशीयुरुक्षुरुणु–णुस्नुभ्यश्च वृगो वृङः ।
> ऊदृदन्तयुजादिभ्यः स्वरान्ता धातवः परे ॥१॥
> पाठ एकस्वराः स्युर्येऽनुस्वारेत इमे स्मृताः ।

ये पाठे धातुपाठे धातुपाठोपदेशावस्थायामित्यर्थः । न तु द्विर्भावादौ । एकस्वरा एक एव स्वरो येषु ते एकस्वराः। तथा अनुस्वारेतः एति अपगच्छतीति इत् प्रयोगकालेऽनवस्थायीत्यर्थः । अनुस्वार इत् येषु ते अनुस्वारेतः। तादृशा ये धातवः स्युस्ते इमे अभ्यस्ततमतया बुद्धिस्थत्वेन प्रत्यक्षा धातवः । अनिट इति पदमन्त्य

कारिकान्तस्थमन्यत्र योज्यम् । स्मृताः । अर्थात् । धातुपाठोपदेशावस्थायां ये एकस्वरा अनुस्वारेतश्च भवेयुस्तेऽनिटो धातवो विज्ञेयाः।इदं च स्वरान्तव्यञ्जनान्त-साधारणं लक्षणं तेनोभयत्र योज्यम् । परे एतत्प्रथमकारिकोक्तेभ्योऽन्ये ये केचन स्वरान्ता एकस्वरा अनुस्वारेतश्च धातवस्ते सर्वेऽपि अनिटः । अस्यां कारिकायां चोक्ताः स्वरान्ताः धातवः सर्वेऽपि सेटः ।

एवं निम्ननिदर्शिता व्यञ्जनान्ता एकस्वरा अनुस्वारेतश्च धातवोऽनिटः । तदुव्यतिरिक्ता व्यञ्जनान्ताः सेटश्च।इमे द्विविधा अपि धातवो ये औदितो न भवेयु-स्ते ग्राह्याः औदितानामनुबन्धफलप्रतिपादकप्रकरणे वेट्त्वाभिधानात् । केभ्यः परे । श्विश्रिडीशीयुरुक्षुक्ष्णुस्नुभ्यः वृगः, वृङः उदृदन्तयुजादिभ्यः । अत्र वृद्ध्यर्थत्वेन माङ्गलिकत्वादादौ श्विधातोर्ग्रहणम् । ९९७ टुवोश्वि (श्वि) गतिवृद्ध्योः । ८८३ श्रिग् ( श्रि ) सेवायाम् । ९८८ डीङ् ( डी ) विहायसांगतौ । १२४९ डीङ्च् ( डी ) गतौ । ११०५ शीङ्क् ( शी ) स्वप्ने । यु-इति सामान्यनिर्देशेऽपि रुक्षु-प्रभृतिसाहचर्यात् । १०८० युक् ( यु ) मिश्रणे इत्यस्यैव ग्रहणं । न तु १५१३ युंगश् ( यु ) बन्धने इत्यस्य । १८०४ युणि ( यु ) जुगु-प्सायामित्यस्य तु चौरादिकत्वादनेकस्वरत्वेन स्वत एव सेट्त्वम् । रु-इति सामान्यनिर्देशेऽपि क्षुप्रभृतिसाहचर्यात् १०८५ रुक् ( रु ) शब्दे इत्यस्यैव ग्रहणं नतु ५९९ रुंङ् ( रु ) रेषणे च इत्यस्य । १०८४ टुक्षुक् ( क्षु ) शब्दे । १०८२ क्ष्णुक् (क्ष्णु) तेजने । १०८१ णुक् (नु) स्तुतौ । १०८३ स्नुक् ( स्नु ) प्रस्नवने १२९४ वृगृट् (वृ) वरणे । १५६७ वृङ्श् ( वृ ) सम्भक्तौ । १९४५ वृगण् (वृ) आवरणे इत्यस्य तु युजादिपाठे एव समावेशः । ऊकार एव ऊत् ॠकार एव ॠत् ऊच्च ॠच्च ऊदृतौ तौ अन्ते एषामिति ऊदृदन्ताः ऊकारान्ता भूप्रभृतयः ॠ-कारान्ता तॄप्रभृतयः । युजादयो युजादिगणपठिता । इमे-१९४३ लीण् (ली) द्रवीकरणे । १९४४ (मीण्) मतौ । १९४५ प्रीगण् (प्री) तर्पणे । १९४६ धूगण् ( धू ) कम्पने । अस्य ऊकारान्तत्वेनापि सेट्त्वम् । १९४७ वृगण् ( वृ ) आव-

रणे। १९४८ जॄण् ( जॄ ) वयोहानौ। अस्य ऋकारान्तत्वेनापि सेट्त्वम्। इमे सर्वेऽप्युक्ताः स्वरान्ताः सेटः। तद्व्यतिरिक्ताः स्वरान्ता अनिटः। अथ व्यञ्जनान्तानिटो नामग्राहं दर्शयति--

द्विविधोऽपि शकिश्चैवं वचिर्विचिरिची पचिः ॥ २ ॥

सिञ्चतिर्मुचिरतोऽपि पृच्छतिर्भ्रस्जिमस्जिभुजयो युजिर्यजिः।
त्वञ्जिरञ्जिरुजयो णिजिविजिषञ्जिभञ्जिभजयः सृजित्यजी ॥ ३ ॥

स्कन्दिविद्यविदूलविन्तयो नुदिः स्विद्यतिः शदिसदी भिदिच्छिदी।
तुद्यदी पदिहदी स्विदीक्षुदी राधिसाधिशुधयो युधिव्यधी ॥ ४ ॥

बन्धबुध्यरुधयः क्रुधिक्षुधी सिध्यतिस्तदनुहन्तिमन्यती।
आपिना तपिशपिक्षिपिच्छुपो लुम्पतिः सृपिलिपी वपिस्वपी॥५॥

यभिरभिलभियमिरमिनमिगमयः क्रुशिलिशिरुशिदिशदिशितिदशयः स्पृशिमृशतिविशतिदशिशिष्लृशुषयस्त्विषिपिषिविष्लृकृषितुषि-
दुषिपुषयः ॥ ६ ॥

श्लिष्यतिर्द्विषिरतो घसिवसती रोहतिर्दुहिरिही अनिडुगदितौ।
देग्धिदोग्धिलिहयो मिहिवहती नह्यतिर्दहिरितिस्फुटमनिटः ॥७॥

१२८० शकींच् ( शक् ) मर्षणे। १३०० शक्लृंट् ( शक् ) शक्तौ। अत्र शक्धातुरेव शकिः। इकिश्तिव् स्वरूपार्थे ॥ ५। ३। १३८ ॥ इति स्वरूपे इप्रत्यये किप्रत्यये वा रूपम्, एवमग्रेतनधातुषु यथायोगं स्वरूपार्थे इप्रत्ययः किप्रत्ययः श्तिव्प्रत्यय इति ज्ञेयम्। १०९६ वचंक् ( वच् ) भाषणे। ११२५ ब्रूगक् ( ब्रू ) व्यक्तायां वाचि इत्यस्य यो वच्-आदेशस्तस्य लाक्षणिकत्वेऽपि अत्र ग्रहणम्। अत एवास्य ब्रूधातोरूकारान्तत्वेन सेट्त्वप्राप्तावपि धातुपाठे सानुस्वारनिर्देशेनानिट्त्वं प्रतिपादितम्। १९७४ वचण् ( वच् ) भाषणे इत्यस्य तु युजादिपाठात्सेट्त्वमेव। १४७५ विचूंपी (विच्) पृथग्भावे ॥ १४७४ रिचूंपी (रिच्) विरे-

चने । १९५३ रिचण् (रिच्) वियोजने च इत्यस्य तु युजादिपाठात्सेट्त्वमेव ॥ ८९२ डुपचींष् (पच्)पाके। १३२१ षिचींत् (सिच्) क्षरणे। अस्य स्वरूपे ञितव् प्रत्यये सिञ्चतिरिति रूपम् । १३२० मुचॢंती (मुच्) मोक्षणे । १७३१ मुचण् (मुच्) प्रमोचने इत्यस्य चौरादिकत्वादनेकस्वरत्वेन सेट्त्वमेव । १३४७ प्रच्छंत् (प्रच्छ्) ज्ञीप्सायाम् । १३१६ भ्रस्जींत् (भ्रस्ज्) पाके । १३५२ टुमस्जींत् (मस्ज्–मज्ज्) शुद्धौ । १३५१ भुजोंत् (भुज्) कौटिल्ये । १४८७ भुजंप् (भुज्) पालनाभ्यवहारयोः । १२५४ युजिंच् (युज्) समाधौ । १४७६ युजूंपी (युज्) योगे । १९४२ युजण् (युज्] संपर्चने इत्यस्य तु युजादिपाठात्सेट्त्वमेव । ९९१ यजीं (यज्) देवपूजासंगतिकरणदानेषु । १४७१ ष्वञ्जिंत् (स्वञ्ज्) सङ्गे । ८९६ रञ्जीं (रञ्ज्) रागे॥१२८२ रञ्जींच् (रञ्ज्) रागे । १३५० रुजोंत् (रुज्) भङ्गे ॥१५९२ रुजण् (रुज्) हिंसायाम् अस्य तु चौरादिकत्वादनेकस्वरत्वेन सेट्त्वमेव । ११४१ णिजृंकी निज् शौचे च । ११४२ विजृंकी [विज्] पृथग्भावे । विजृ इति ऋकारसहितग्रहणादस्यैव विज् धातोर्ग्रहणम् । न तु १४६८ओविजैंति[विज्] भयचलनयोरित्यस्य १४८९ ओविजैंप् (विज्) भयचलनयोरित्यस्य च । ननु अत्यन्तानिकस्थनिज्–साहचर्याद्भिमतस्यैव ग्रहणे किं पुनः ऋकारसहितनिर्देश इति चेत्साहचर्यपरिभाषाया अनित्यत्वसूचनार्थमेतत्तेन शब्दसहचरितासहचरितयोः सदोरत्र प्रकरणे ग्रहणम् । १७३ षञ्जं [सञ्ज्] सङ्गे । १४८६ भञ्जोंप् (भञ्ज्) आमर्दने । ८९५ भजीं (भज्) सेवायाम् । १७३४ भजण् [भज्] विश्राणने । इत्यस्य तु चौरादिकत्वादनेकस्वरत्वेन सेट्त्वमेव । १२५९ सृजिंच् (सृज्) विसर्गे । १३४९ सृजंत् [सृज्] विसर्गे । १७२ त्यजं [त्यज्] हानौ । ३१९ स्कन्दृं (स्कन्द्) गतिशोषणयोः । विद्य-इति श्यविकरणसहितग्रहणादनेन । १२५८ विदिंच् [विद्] सत्तायामित्यस्य ग्रहणम् । विद्ऌ–इति ऌकारानुबन्धसहितग्रहणादनेन । १३२२ विद्ऌंती [विद्] लाभे इत्यस्य ग्रहणम् । विन्ति–इति श्नविकरणसहितग्रहणादनेन । १४९७ विदिंप् [विद्] विचारणे इत्यस्य ग्रहणम् । एषां विशेषेणोपादानात् । १०९९ विदक् [विद्] ज्ञाने इत्यस्य

न ग्रहणम् । १८०९ विदिण् [ विद् ] चेतनाख्यानानिवासेषु इत्यस्य तु चौरादिकत्वादनेकस्वरत्वेन सेट्त्वं सिद्धमेव ॥

वेत्तेर्विदितं विन्तेर्विन्नं वित्तश्च विद्यतेर्विन्नम् ॥
वित्तं धने प्रतीते च विन्दतेर्विन्नमन्यत्र ॥ १ ॥

१३७० णुदंत् [ नुद् ] प्रेरणे । स्विद्यतीति श्यविकरणसहितग्रहणादनेन ११७८ ष्विदांच् ( स्विद् ) गात्रप्रक्षरणे इत्यस्यैव ग्रहणं नतु ९४६ ञिष्विदाङ् ( स्विद् ) मोचने च इत्यस्य । ९६७ शद्लृं (शद्) शातने । ९६६ षद्लृं (सद्) विशरणगत्यवसादनेषु । १३७१ षद्लृंत् ( सद् ) अवसादने । १४७७ भिदृंपी [ भिद् ] विदारणे । १४७८ छिदृंपी ( छिद् ) द्वैधीकरणे । १३१५ तुदींत् ( तुद् ) व्यथने । १०५७ अदंक् ( अद् ) भक्षणे । १२५७ पदिंच् ( पद् ) गतौ । १९३३ पदिण् (पद्) गतौ । इत्यस्य तु चौरादिकत्वादनेकस्वरत्वेन सेट्त्वमेव । ७२८ हदिं ( हद् ) पुरीषोत्सर्गे । १२५९ खिदिंच् ( खिद् ) दैन्ये । १३२६ खिदंत् ( खिद् ) परिघाते । १४७९ खिदिंप् [ खिद् ] दैन्ये । १४८० क्षुदृंपी [ क्षुद् ] संपेषे । ११५६ राधंच् [ राध् ) वृद्धौ । १३०४ राधंट् (राध्) संसिद्धौ । १३०५ साधंट् ( साध् ) संसिद्धौ । ११८३ शुधंच् ( शुध् ) शौचे । १२६० युधिंच् ( युध् ) सम्प्रहारे । ११५७ व्यधंच् ( व्यध् ) ताडने । १५५२ बन्धश् ( बन्ध्) बन्धने । १६६३ बन्धण् ( बन्ध् ) संयमने इत्यस्य तु चौरादिकत्वादनेकस्वरत्वेन सेट्त्वमेव । बुध्य-इति श्यविकरणसहितनिर्देशात्१२६२ बुधिंच् ( बुध् ) ज्ञाने इत्यस्यैव ग्रहणं नतु ९१२ बुधृग् ( बुध् ) बोधने ९६८ बुध (बुध्) अवगमने इत्यस्य च । १४७३ रुधृंपी ( रुध् ) आवरणे । १२६१ अनोरुधिंच् [ अनु-रुध् ] कामे । ११८४ क्रुधंच् ( क्रुध् ) कोपे । ११८२ क्षुधंच् [ क्षुध् ] बुभुक्षायाम् । सिध्यति-इति श्यविकरणसहितनिर्देशात् ११८५ षिधूच् ( सिध् ) संराद्धौ इत्यस्यैव ग्रहणं न तु ३२० षिध् [ सिध् ] गत्यामित्यस्य ३२१ षिधौ ( सिधू ) शास्त्रमाङ्गल्ययोरित्यस्य च ।

११०० हनंक् ( हन् ) हिंसागत्योः । मन्यति-इति श्यविकरणसहितनि-

र्देशात् १२६३ मनिंच् ( मन् ) ज्ञाने इत्यस्यैव ग्रहणं नतु १५०७ मनूयि [मन्] बोधने इत्यस्य । १८१० मनिण् (मन् ) स्तम्भे इत्यस्य तु चौरादिकत्वादनेकस्वरत्वेन सेट्त्वमेव । १३०७ आप्लृंट् ( आप् ) व्याप्तौ । १९७१ आप्लृण् (आप्) लम्भने इत्यस्य तु युजादिपाठात्सेट्त्वमेव । ३३३ तपं [ तप् ] संतापे । १२६७ तपिंच् ( तप् ) ऐश्वर्ये वा । १९७१ तपिण् [तप् ] दाहे इत्यस्य तु युजादिपाठात्सेट्त्वमेव । ९१६ शपीं ( शप् ) आक्रोशे । १२८३ शपींच ( शप् ) आक्रोशे ११५८ क्षिपंच् [ क्षिप् ] प्रेरणे । १३१७ क्षिपिंत् [ क्षिप् ] प्रेरणे ।

१३७५ छुपंत् ( छुप् ) स्पर्शे लुम्पति इति मागमसहितनिर्देशात् १३२१ लुप्लृंती [ लुप् ] छेदने इत्यस्यैव मागमादेस्य ग्रहणं नतु ११९५ लुपच् [ लुप् ] विमोहने इत्यस्य । १३४१ सृप्लृं [ सृप् ] गतौ । १३२४ लिपींत् ( लिप् ) उपदेहे ९९९ डुवपीं [ वप् ] बीजसंताने । १०८८ ञिष्वपंक् [ स्वप् ] शये । ३७८ यभं (यभ् ) मैथुने । ७८५ रभिं [ रभ् ] राभस्ये । ७८६ डुलभिंष् (लभ्) प्राप्तौ । ३८६ यमूं ( यम ) उपरमे । ९८९ रमिं [ रम ] क्रीडायाम् । ३८८ णमं ( नम ) प्रह्वत्वे । ३९६ गम्लृं [ गम ] गतौ । ९८६ क्रुशं ( क्रुश् ) आह्वानरोदनयोः । १२७७ लिशिंच् ( लिश् ) अल्पत्वे । १४१७ लिशंत् [लिश्] गतौ । १४१३ रुशंत् [ रुश् ] हिंसायाम् । १४१४ रिशंत् [ रिश् ] हिंसायाम् १३१८ दिशींत् [ दिश् ] अतिसर्जने । ४९३ दंशं ( दंश् ) दशने । १४१२ स्पृशंत् ( स्पृश् ) स्पर्शे । १४१६ मृशंत् [ मृश् ) आमर्शने । १४१५ विशंत् (विश्) प्रवेशने । ४९५ दृशूं [ दृश् ) प्रेक्षणे । लृकारसहितग्रहणात् १४०२ शिष्लृंप् ( शिष् ) विशेषणे इत्यस्यैव ग्रहणं नतु ५०८ शिष ( शिष् ) हिंसायामित्यस्य । १९७७ शिषण् (शिष्) असर्वोपयोगे इत्यस्य तु युजादिपाठात्सेट्त्वमेव । १२०८ शुषंच् ( शुष् ) शोषणे । ९३० त्विषीं [ त्विष् ] दीप्तौ । १४०३ पिप्लृंप् ( पिष्) संचूर्णने । विष्लृ–इति लृकारसहितनिर्देशात् ११४३ विप्लृंकी [ विष् ] व्याप्तौ इत्यस्यैव ग्रहणं न तु ५२३ विषू [ विष् ] सेचने इत्यस्य १५६० विषश् [ विष् ] विप्रयोगे इत्यस्य च । ५०६ कृषं [ कृष् ] विलेखने । १३१९ कृषींत्

( कृष् ) विलेखने । १२१३ तुषंच् ( तुष ) तुष्टौ । १२०९ दुषंच् [ दुष् ) वैकृत्ये दुष्-साहचर्यात ११७५ पुषंच् ( ॥ ) पुष्टौ इत्यस्यैव ग्रहणं न तु । ५३६ पुष [ पुष् ) पुष्टौ इत्यस्य ;विर्त्तविंक्लंपश् [ पुष ) पुष्टौ इत्यस्य च । १७५५ पु-षण् [ पुष्) धारणे इत्यस्य तु चौरादिकत्वादनेकस्वरत्वेन सेट्त्वमेव । श्लिष्यति-इति श्यविकरणसहितनिर्देशात् । १२१० श्लिषंच् ( श्लिष् ] आलिङ्गने इत्यस्यैव ग्रहणं न तु । ५३१ श्लिषू [ श्लिष् ) दाहे इत्यस्य । १७०४ श्लिषण् [ श्लि ) श्लेषणे इत्यस्य तु चौरादिकत्वादनेकस्वरत्वेन सेट्त्वमेव । १६२६ ञ्चिषींक् (ञ्चिष्) अप्रीतौ । ५४४ घस्लृं ( घस ) अदने । वसति-इति शव्विकरणसहितनिर्देशात् । ९९९ वसं ( वस् ) निवासे इत्यस्यैव ग्रहणं न तु १११७ वसिक् (वस्) आच्छादने इत्यस्य । १२२६ वसूच् ( वस् ) स्तम्भे इत्यस्य च । १७६१ वसण् ( वस् ] स्नेहच्छेदावहरणेषु इत्यस्य तु चौरादिकत्वेनानेकस्वरत्वात्सेट्त्वमेव । ९८८ ( रुहं ] रुह् ] जन्मनि । अत्र रोहति-इति शवविकरणसहितनिर्देशः श्लोकरचनार्थः । लुहि रुही ( लुह्-रुह् ) इमौ धातुपाठेषु न दृश्येते छान्दसौ मन्त्रान्तरीयौ वा संभाव्येते । देग्धीति । ११२८ दिहींक् ( दिह् ) लेपे । दोग्धीति । ११२७ दुहींक् ( दुह् ) क्षरणे । ११२९ लिहींक् ( लिह् ) आस्वादने । ५५१ मिहं [ मिह् ) सेचने । ९९६ वहीं ( वह् ) प्रापणे । १२८५ णहींच् ( नह् ) बन्धने । ५५२ दहं [ दह् ] भस्मीकरणे । इति स्फुटं यथा स्यात्तथा इमे व्यञ्जनान्ता धातवोऽनिटः, तद्व्यतिरिक्ता व्यञ्जनान्ताः सेटः । इति स्वरान्तव्यञ्जनान्तधातूनां सेट्त्वानिट्त्वे प्रपञ्चिते ॥

## ॥ समाप्ता अनिट्कारिकाः ॥

## ॥ अथ धातुप्रत्ययानुबन्धफलप्रतिपादकाः श्लोकाः ॥

उच्चारणेऽस्त्यवर्णाद्य आः क्तयोरिण् निषेधने ।
इकारादात्मनेपद-मीकाराच्चोभयं भवेत् ॥ १ ॥
उदितः स्वरान्नोन्तश्चो-क्त्वादावेटो विकल्पनम् ।
रूपान्त्ये ङेपरेऽह्रस्व ऋकारादङ् विकल्पकः ॥ २ ॥
ऌकारादङ् समायात्येः सिचि वृद्धिनिषेधकः ।
एः क्तयोरिण्निषेधः स्या-दोः क्तयोस्तस्य नो भवेत् ॥ ३ ॥
औकार इड्विकल्पार्थेऽनुस्वारोऽनिड्विशेषणे ।
ऌकारश्च विसर्गश्चा-नुबन्धो भवतो नहि ॥ ४ ॥
कोऽदादिर्न गुणी प्रोक्तः खे पूर्वस्य मुमागमः ।
गे नोभयपदी प्रोक्तो घश्च चजोः कगौ कृतौ ॥ ५ ॥
आत्मने गुणरोधे ङ-श्चो दिवादिगणो भवेत् ।
ञो वृद्धौ वर्तमाने क्तः टः स्वादिष्ठणुकारकः ॥ ६ ॥
त्रिमगर्थौ डकारः स्याण् णश्चुरादिश्च वृद्धिकृत् ।
तस्तुदादौ नकारश्चेच्चापुंसीति विशेषणे ॥ ७ ॥
रुधादौ नागमे पोऽहि मो दामः सम्प्रदानके ।
यस्तनादौ रकारः स्यात् पुंवद्भावार्थसूचकः ॥ ८ ॥
स्त्रीलिङ्गार्थे लकारो हि उत और्विति वो भवेत् ।
शः क्र्यादिः वयः शिति प्रोक्तः षः षितोङ् विशेषणे ॥ ९ ॥
पटत्वार्थे सकारो हि नोक्ता अत्र न सन्ति च ।
धातूनां प्रत्ययानाञ्चा-नुबन्धः कथितो मया ॥ १० ॥

उच्चारणम् उच्चारणार्थं श्रुतिसुखदोच्चारणार्थमिति यावत् । अवर्णाद्यः अवर्णस्तु अकार आकारश्च वर्णग्रहणे स्वसंज्ञकस्यापि ग्रहणमिति न्यायात् । तत्राकारव्यवच्छेदार्थमाह—अवर्णस्य अकाराकाररूपस्याद्यः प्रथम अकार इत्यर्थः ।

अस्ति । अकारः श्रुतिसुखदोच्चारणार्थं धात्वादौ अनुबन्धतया योज्यत इत्यर्थः । यथा ८१ तक ( तक् ) हसने । एवम् आ आकारः क्तयोः क्तक्तवतु प्रत्यययोरादौ इण्निषेधने इकारनिषेधार्थः । यथा १२५ हुर्छा ( हुर्छ् ) कौटिल्ये। अन्नादित्वात् आदित इति क्तयोरिडभावे हूर्णः हूर्णवान् । इकाराद् आत्मनेपदं भवति । यथा ६१८ ककि ( कक् ) लौल्ये । अत्र इङ्गित इत्यात्मनेपदे ककते । चः समुच्चये । ईकाराद् उभयमुभयपदं भवति । ८९५ भजीं [ भज् ] सेवायाम् । अत्र ईदित्वात्फलवत्कर्तरि ईगित इत्यात्मनेपदम् । अफलवति तु शेषात्परस्मै इति परस्मैपदमेवोभयपदं भवति । चो– उश्च ऊश्चानयोः समाहार इति ऊ ततः क्लीबे इति ह्रस्वत्वे उ इति ततः च–उ–इति अकारस्य उकारस्य च सन्धौ चो इति जातम् । तथा च चोशब्देन च, उः, ऊः, इति ज्ञेयम् । तत्र चकारः समुच्चये । उः उकार उदितः स्वरान्नोऽन्त इत्यत्र विशेषणार्थः । ऊः ऊकारः क्त्वादौ क्त्वाप्रत्ययस्य आदौ इड इकारस्य विकल्पनं करोतीति शेषः । अथवा-उ–उदितः स्वरान्नोऽन्तः च-ऊः इति ऊदितस्वरान्नोऽन्तः, च–ऊः, इति ऊदितस्वरान्नोऽन्तश्चोः इति पाठो ज्ञेयः । तत्र प्रथमो य उशब्दस्तेन उरूपमक्षरमिति नपुंसकलिङ्गार्थं व्याख्येयम् । यथा ५२ तकु [ तक्–तन्क्–तङ्क् ] कृच्छ्रजीवने । अत्र उदित्वाद् उदितः स्वरान्नोऽन्त इति नागमः । १०६ वञ्चू [ वञ्चु ] गतौ । ऊदितो वा इति वेट् । वक्त्वा । इटि तु क्त्वा सेटि क्त्वो वा किश्वे वचित्वा वञ्चित्वा ऋ उपान्त्ये इत्यवस्थायां सन्धौ ऋपान्त्ये । ङे परे ङप्रत्यये परे ङपरकणौ प्रत्यये इति यावत् अह्रस्वो ह्रस्वाभावः । ङपरकणिप्रत्यये परे सति ऋदितां धातूनामुपान्त्यस्य ह्रस्वो न भवति । यथा ५५ ओखृ ( ओख् ) शोषणालमर्थयोः । अत्र ऋदित्वाद् ङपरे णौ उपान्त्यस्येति न ह्रस्वः । मा भवानोचिखत् । ऋदित्वादेव चौतो नेत्संज्ञा प्रयोगित्वाच्च । एवं ५६ राखृ ( राख् ) शोषणालमर्थयोः । अरराखत् । ऋकाराद् अङः विकल्प एव विकल्पकः । २८० च्युतृ ( च्युत् ) आसेचने । ऋदित्वाद् ऋदिच्छ्वीति वाङि अच्युतत् अच्योतीत् । ऌकाराद् अङ् समायाति १९६ गम्ऌं [गम्] गतौ । ऌदित्वाद् ऌदिद्द्युतादित्य-

ङि अगमत् । ए: एकारः सिचि वृद्धिनिषेधकः । १७४ कटे ( कट् ) वर्षावरणयोः । अत्र व्यञ्जनादेर्वोपान्त्यस्येति वा प्राप्ताया वृद्धेरेदित्वान्न श्विजाग्रिति प्रतिषेधे अकटीत् । ऐः ऐकारो यदि भवेत्तर्हि क्तयोःक्तक्तवतुप्रत्यययोरादौ इण्निषेधो भवति । २०० कटै(कट्)गतौ । अत्रैदित्वात् डीयश्व्यैदितःक्तयोरिति क्तयोर्नेट् कट्ट:· कट्टवान् । ओः ओकारो यदि स्यात्तर्हि क्तयोः क्तक्तवतुप्रत्यययोस्तकारस्य नो नकारो भवेत् । ४८ ओवै (वै) शोषणे । अत्र ओदित्वात् सूयत्यादीति क्तयोस्तस्य नत्वे वानः वानवान् । २१ औस्त्र ( स्तृ ) शब्दोपतापयोः । अत्रौदित्वात् धूगौदित इति वेट् । स्वर्ता स्वरिता सुस्वूर्षति सिस्वरिषति । अनुस्वारः बिन्दुरूपोऽनिड्विशेषणे अनिट्त्वार्थं इत्यर्थः ।

२ पां [पा] पाने । अत्रानुस्वारेत्त्वात् स्तान्न्यशित इति प्राप्तस्येटः एकस्वरादनुस्वारेत इति निषेधः । पाता पास्यति । लृकारो विसर्गश्चानुबन्धो न भवतः । ककारो यदि धातौ स्यात्तदा धातुः अदादिर्भवति । एवं ककारो यदि प्रत्यये स्यात्तदा तस्मिन् प्रत्यये परे धातुर्गुणी गुणवान् न भवति ।११०० हनंक्(हन्)हिंसागत्योः । कित्करणाददादित्वं तेन कर्त्तर्यनद्भ्यः शव् इत्यत्र अदादिवर्जनाच्छवभावे हन्ति । भू-सत्तायाम् । भू-क्यात्-भूयात् अत्र कित्त्वेन नामिनो गुणोऽक्ङितीत्यत्र क्ङिद्वर्जनान्न गुणः खे पूर्वस्य-मुमागम इति मुम्-इति (म्)इत्यस्य प्राचां संज्ञा तथा-इड्व्यवहारः प्राचां-संज्ञाया व्यवहार इत्यत्र प्रमाणम्-यजादेः संप्रसारणमिति एवञ्च मुमागम इत्यस्य ागम इत्यर्थः । खे खिति पूर्वस्य म् आगमो भवति १२० मनिंच् (मन्) ज्ञाने कर्तुः खश् इति खशि खित्यनव्ययेति मागमे च पटुमात्मानं मन्यत इति पटुंमन्यः॥ ८८३ श्रिग्(श्रि) सेवायाम् । गित्त्वात्फलवति कर्त्तरि ईगित इत्यात्मनेपदेऽन्यत्रशेषात्परस्मैगिति परस्मैपदे चोभयपदं ज्ञेयम् । श्रयते श्रयति । घो घकारो यदि स्यात्तदा चजोः चकारजकारयोः कगौ क्रमेण ककारगकारौ कृतौ विहितौ ज्ञातव्यौ । भाविनि भूतोपचाराद् । घकारे इति चकारस्य ककारो जकारस्य गकारो भवतीत्यर्थः । ८९२ डुपचींष् ( पच् ) पाके । पचनं [ पच्-घञ् ] पाकः । ९९१ यजीं ( यज् ) देवपूजासंगतिकरणदानेषु । यजनं ( यज-घञ् ) यागः

। अत्र चजः कगमिति चकारस्य कत्वं जकारस्य गत्वञ्च । आत्मने इति पदैकदेशे पदसमुदायोपचाराद् आत्मनेपदे आत्मनेपदार्थं गुणरोधे गुणनिषेधार्थञ्च ङो ङ-कारो भवति । ५८६ गांङ् ( गा ) गतौ ङित्त्वाद् इङित इत्यात्मनेपदे गाते । ९३७ द्युति ( द्युत् ) दीप्तौ । द्युत्-अङ् अद्युतत् अत्र ङित्त्वेन-नामिन इत्यत्र ङि-द्वर्जनान्न गुणः ।चः चकारो यदि स्यात्तदा दिवागणो भवेत् दिवादिगणीयो धा-तुर्भवेदित्यर्थः । ११५३ कुथच् (कुथ्]पूतिभावे । अत्र चित्त्वाद्दिवादित्वेन दिवा-देरिति श्ये कुथ्यति । ञो ञकारो ञ्णौ वृद्ध्यर्थः ॥

एवं ञो नाम ञकारोपलक्षितो ञिर्यदि भवेत्तदा धातोर्वर्तमाने क्तप्रत्ययो भवति । १ भू सत्तायाम् । अनु-अ-भू-ञिच् अन्वभावि-अत्र ञित्त्वाद् ञ्णतीति वृद्धिः । ३०० ञिक्ष्विदा ( क्ष्विद् ) अव्यक्ते शब्दे । ञित्त्वाज्ज्ञानेच्छार्चार्थे मत्यर्थे क्तः । क्ष्विद्यते क्ष्विण्णः । टकारो यदि स्यात्तदा स्वादिः स्यात् । १२८६ षिगट् (सि) अभिषवे । अत्र टित्त्वेन स्वादित्वात् स्वादेःश्नुरिति श्नौ सिनुते(टःस्वादिष्टृथुकारकः) अत्र टथ्कारकः.इति पाठो न समीचीनः टानुबन्धानुपलम्भात् ठ-इत्यस्य निर्विभक्ति कत्वात् अयोग्यतया समासाभावात् थुकारक इत्यत्र थुरूपकार्यानुपलम्भाच्च अतः टःस्वादिरथुकारकः, इति पाठः सम्यक् टकारः स्वादिः ( षिगट्-सिनुते इति उ-कारविशिष्टः-टकारः अथुकारकः यथा टुवपीं बीजसन्ताने, इति 'ड्वितोऽथुः' इति अथौ वपथुरिति । त्रिमगर्थो टकार इत्यग्रिमग्रन्थानुरोधेन-उकारविशिष्ट इति अवश्याध्याहार्यम-इति तस्मिन् पाठे न कोऽपि दोष इति-त्रिमग् अर्थः प्रयोजनं यस्य तादृशो टकारः स्यात् अत्र टकारेण टकारोपलक्षितो टुकारो ज्ञेयः ।८९२ डुप-चींष् ( पच ) पाके । ड्वित्त्वात्रिमकि पाकेन निर्वृत्तं पक्त्रिमम् । णो णकारो यदि स्यात्तदा चुरादिः धातुश्चुरादिगणीयो भवति, एवं णकारो वृद्धिकृदस्ति १५७२ वल्कण् [ वल्क् ] भाषणे । णित्वाच्चुरादित्वेन चुरादिभ्य इति णिचि वल्कयति । १२ दु (दु) गतौ णवि वृद्धौ दुदाव । १३१७ क्षिपींत् (क्षिप) प्रेरणे । तित्त्वात् तुदादेः श इति क्षिपति । नकारश्च इच्चापुंसोऽनित्क्याप्परे इत्यत्र विशेषणार्थः । ख-ट्विका खट्वाका । अनिदिति किम् । दुर्गका पकारो रुधादौ नागमार्थः । अथति

पकारेण रुधादित्वं भवति रुधादित्वाच्च नागमो भवति । १४७३ रिचूंपी (रिच्) विरेचने रुधां स्वरादिति श्ने रिणक्ति किन्तु रुधादौ नागमे पोहि–इति पाठः सम्यक्–तस्येयं व्याख्या पकारो रुधादिघटकः पकारानुबन्धेन धातूनां रुधादित्वं भवतीति भावः, प्रत्ययस्थपकारानुबन्धः तागमप्रयोजकः– (ह्रस्व–इत्यादिना क्यपि 'ह्रस्वस्य तः पित्कृति ' तागमे आहत्य प्राहृत्य इति, मो मकारः, दामः सम्प्रदानेऽधर्म्ये आत्मने च इत्यत्र विशेषणार्थः । दास्या सम्प्रयच्छते कामुकः । यो यकारः तनादेः सूचकः । १५०१ क्षणूयी ( क्षण् ) हिंसायाम । यित्वात् कृग्तनादेरित्यौ च तनुते । रकारः पुंवद्भावरूपो योऽर्थस्तत्सूचकः । पट्वी भकारोऽस्याः पटुजातीया । भकारे जातीयरिति जातीयरि प्रत्यये रितीति पुंवद्भावः । लकारो स्त्रीलिङ्गार्थः। जनानां समूहो जनता अत्र तल्प्रत्ययस्य लित्वात्स्त्रीत्वम् । वकार उत और्विति–व्यञ्जनेऽद्वेरित्यत्र विशेषणार्थः १०७७ युंक् (यु) अभिगमने । यौति। शकारो यदि स्यात्तदा क्र्यादिः स्यात् । १५०७ षिगृश् ( सि ) बन्धने । शित्वात्क्र्यादित्वेन क्र्यादेरिति श्नाप्रत्यये सिनाति । वयःशितीत्यत्र विशेषणार्थः । भूयते अत्र भावकर्मविहिते शिति क्यः । षकारःषितोऽङ् इत्यत्र विशेषणार्थः । ८९२ डुपचींष्(पच्) पाके । पच्यतेऽसाविति पचा । सकारः पदत्वार्थं पदत्वप्रयोजकः । भवतोरिकणीयसौ,इतीयसि नामसिदय्व्यञ्जने-इति पदत्वे धुटस्तृतीय इति दत्वे भवदीय इति येऽनुबन्धतया नोक्तास्तेऽनुबन्धा न सन्ति । अनुबन्धास्तु इयन्त एव ।अपि तु अत्रानुबन्धानां यद्यत्फलमुक्तं तेन प्रयोजनान्तराण्यप्युपलक्ष्यन्ते । यथा टकारस्य प्रयोजनंस्वादित्वमेवोक्तं तथापि २८ ट्धें (धे) पाने । अत्र टकारःशुनिंधयीत्यादौ ङ्यर्थः । एवं डकारस्यान्त्यस्वरलोपप्रभृतिप्रयोजनं स्वयमूह्यम् ।

## अत्रार्थेऽन्येऽपि कतिचित्श्लोकाः

अदादयः कानुबन्धाश्चानुबन्धा दिवादयः
स्वादयष्टानुबन्धा–स्तानुबन्धास्तुदादयः ॥ १ ॥
रुधादयः पानुबन्धा यानुबन्धास्तनादयः ।
क्र्यादयः शानुबन्धा णानुबन्धाश्चुरादयः ॥ २ ॥

## ॥ इत्यनुबन्धफलप्रतिपादकप्रकरणम् ॥

## ॥ वृतुगणफलनिरूपणम् ॥

द्युतादेरद्यतन्यां चाङात्मनेपदमिष्यते
वृदादिपञ्चकेभ्यो वा स्यसनोरात्मनेपदम् ॥ १ ॥
ज्वलादेर्णो विकल्पेन यजादेः संप्रसारणम् ।
घटादीनां भवेद्ह्रस्वो णौ परेऽजीघटत् सदा ॥ २ ॥
अद्यतन्यां पुषादित्वादङ् परस्मैपदे भवेत् ।
स्वादित्वाच्च क्तयोस्तस्य नकारः प्रकटो भवेत् ॥ ३ ॥
प्वादीनां भवेद्ह्रस्वो ल्वादेस्क्तयोश्च नो भवेत् ।
युजादयो विकल्पेन ज्ञेयाश्चुरादिके गणे ॥ ४ ॥
मुचादेर्नागमः शे च कुटादित्वात्सिचि परे ।
गुणवृद्धयभावश्च कथितो हेमसूरिणा ॥ ५ ॥
अदन्तानां गुणो वृद्धिर्यङ् चुरादेश्च नो भवेत् ।
संक्षेपेण फलश्चैतज्ज्ञेयं सूत्रानुसारतः ॥ ६ ॥

वृत् गणानामान्तर्गणास्तेषामान्तर्गणकरणे यत्फलं तदुच्यते । द्युतादेर्द्युतादिगण-पठितधातोरद्यतन्यामङ्आत्मनेपदञ्च वा भवति । अर्थात्-द्युतादिगणस्य फलम-द्यतन्यां विकल्पेनाऽङात्मनेपदभवनम् । ९३७ द्युति ( द्युत् ) दीप्तौ । द्युद्भ्योऽद्यतन्यामित्यात्मनेपदिनोऽपि विकल्पनात्पक्षे शेषात्परस्मायिनि परस्मैपदे लृदिद्द्युतादीत्यङि: अद्युतत् । पक्षे अद्योतिष्ट । वृदादिपञ्चकेभ्यो वृदादेः पञ्चनः स्यसनोः स्यादौ प्रत्यये सनि च विषये आत्मनेपदं वा भवति । अयं वृदादिर्द्यु-ताद्यन्तर्गणस्तेन द्युतादिफलन्तु अस्त्येव तदतिरिक्तमिदं ज्ञेयम् । ९५९ वृतूङ् ( वृत ) वर्तने । अवृतत् । अवर्त्तिष्ट । वृद्भ्य इति स्यसनोर्विषये वात्मनेपदमात्म-नेपदाभावे च न वृद्भ्य इति नेट् । वर्तिष्यते, वर्त्स्यति, अवर्तिष्यत, अवर्त्स्यत् । सनि विवृत्सति विवर्तिषते । ज्वलादेर्णः प्रत्ययो विकल्पेन भवति । ९६० ज्वल ( ज्वल् ) दीप्तौ । वा ज्वलादीति णे ज्वालः । पक्षे ज्वलः । यजादेर्यजादिग-

णस्य फलं सम्प्रसारणं य्वृत् । ९९१ यजीं ( यज् ) देवपूजासङ्गतिकरणदानेषु । यजादिवशिति पूर्वस्य य्वृति इयाज । यजादिवचेरिति य्वृति ईजे । घटादीनां फलं तु णौ णिप्रत्यये परे ह्रस्वः । १००० घटिष् (घट्) चेष्टायाम् । घटादेरिति ह्रस्वे । घटयति । (णौ परेऽजीघटत् सदा) अयं भावः'जासनाटक्राथपिषो हिंसायां' इत्यत्र क्राथेत्याकारोपान्त्यनिर्देशादाकारश्रुतावस्य प्रवृत्तेः चौरस्योत्क्राथयतीति घटादेर्ह्रस्व इति ह्रस्वत्वाभावः । अद्यतन्यां तु ह्रस्वघटितमेव रूपं भवति इति अजीघटत्सदेत्यनेन सूचितमिति क्राथेरपि उदचिक्रथादिति ' उपान्त्यस्य ' इति ह्रस्वस्तु न निषिध्यते यस्मिन् प्राप्त एवेति न्यायादिति । पुषादित्वादद्यतन्यां परस्मैपदेऽङ् भवति । दिवाद्यन्तर्गणपुषादिगणस्य फलं परस्मैपदेऽद्यतन्यामङ् प्रत्ययभवनमित्यर्थः । ११७५ पुषंच् ( पुष ] पुष्टौ । लदिदिति अङि अपुषत् । स्वादित्वात् दिवाद्यन्तर्गणस्वादिगणपठितत्वात् क्तयोस्क्तक्तवतुप्रत्यययोस्तकारस्य नकारो भवति । १२४१ षूङौच् ( सू ) प्राणिप्रसवे । सूयत्यादीति क्तयोस्तस्य नत्वे सूनः सूनवान् । प्वादीनां क्र्याद्यन्तर्गणप्वादिगणपठितधातूनां ह्रस्वो गदितः । १५१८ पूग्श् ( पू ) पवने । प्वादेरिति ह्रस्वे पुनाति पुनीते । ल्वादेः क्र्याद्यन्तर्गणप्वान्तर्गणल्वादिगणपठितधातोस्क्तयोस्तस्य नो भवेत् । १५१९ लूग्श् [ लू ) छेदने । क्तल्वादेरिति क्तक्तीनां तो नत्वे लूनः लूनवान् लूनिः । युजादयो युजादिगणपठिता धातवश्चुरादिगणे विकल्पेन ज्ञेयाः । चुराद्यन्तगणयुजादिगणस्य फलं विकल्पेन णिचग्रहणमित्यर्थः । १९४२ युजण् [ युज् ) सम्पर्चने । युजादेरिति वा णिचि योजयति । पक्षे न्यायविकरणः शव् योजति । मुचादेस्तुदाद्यन्तर्गणमुचादिगणस्य फलं शे श्नप्रत्यये नागमः । १३२० मुच्लृन्ती ( मुच ) मोक्षणे मुचादीनि स्वरात्परे नेन्ते मुञ्चति, मुञ्चते । कुटादित्वात् तुदाद्यन्तर्गणकुटादिगणपठितत्वात् सिचि परे गुणवृद्ध्यभावः ।यथा १४२६ कुटत् [कुट्) कौटिल्ये । कुटादेरिति ङित्त्वात् गुणाभावे सिचि अकुटीत् । १४२९ णूत [ णूत् ) स्तवने । कुटादेरिति ङित्त्वात् सिचि परस्मायिति वृद्ध्यभावे अनुवीत् । चुरादेरदन्तानां चुरादिगणपठितादन्तधातू-

नामित्यर्थः । गुणो वृद्धिश्च न भवेत् । सुखण ( सुख् ) तत्क्रियायाम् । १८५४ रचण् ( रच् ) प्रतियत्ने । रचयति । अत्रान इत्यल्लुकः स्वरादेशत्वेन स्थानिवत्त्वाद् गुणवृद्ध्यभावः । अररचत् । असुसुखत् । अत्र समानलोपित्वादसमानलोप इति पूर्वस्य सन्वद्भावो लघोर्दीर्घ इति दीर्घश्च न भवति । १८५५ सूचण् ( सूच् ) पैशून्ये अत्रोपान्त्यह्रस्वाभावः ॥

## ॥ इति वृत्गणफलनिरूपणम् ॥

## ॥ सकर्मकत्वाकर्मकत्वानिरूपणम् ॥

फलव्यापारयोरेक — निष्ठतायामकर्मकः ।
धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः ॥ १ ॥

फलस्य गतिनिवृत्त्यादिरूपस्य व्यापारस्य गतिनिवृत्त्यनुकूलव्यापारादिरूपस्य च एकनिष्ठतायामेकाधिकरणवृत्तितायां सत्यां धातुरकर्मको भवति । फलसमानाधिकरणव्यापारबोधकत्वं समानाधिकरणफलावच्छिन्नव्यापारबोधकत्व वाकर्मकत्वमिति फलितोऽर्थः । यथा पष्ठां ( स्था ) गतिनिवृत्तौ अत्र फलं गतिनिवृत्तिः व्यापारस्तदनुकूल इति फलं व्यापारश्चोभयं देवदत्तस्तिष्ठति इत्यत्र देवदत्तरूपैकाधिकरणे वर्त्तते । देवदत्तस्तिष्ठतीति कोऽर्थः ?, गतिनिवृत्त्यनुकूलव्यापारवान् देवदत्तः । एवं तयोः फलव्यापारयोः धर्मिभेदेऽधिकरणभेदे भिन्नभिन्नाधिकरणवृत्तितायां सत्यां धातुः सकर्मको भवति । फलव्यधिकरणव्यापारबोधकत्वं व्यधिकरणफलावच्छिन्नव्यापारबोधकत्वं वा सकर्मकत्वमिति फलितोऽर्थः । यथा ८९२ डुपचींष् ( पच् ) पाके । देवदत्तस्तण्डुलान् पचति । कोऽर्थः ? तण्डुलनिष्ठविक्लित्यनुकूलव्यापारवान् देवदत्तः । अत्र फलं विक्लित्तिः सा तण्डुलेषु वर्त्तते व्यापारस्तदनुकूलः स देवदत्ते वर्त्तते इति फलव्यापारयोर्भिन्नाधिकरणता ।

अर्थान्तरे वर्त्तमानस्याकर्मकस्यापि सकर्मकत्वं भवति कालाध्वभावदेशापेक्षया च सर्व एव धातवः सकर्मकाः । मासमास्ते । क्रोशो गुडधानाभिर्भूयते । गोदो–

स्वपिति । कुरून् शेते । अर्थान्तरवृत्त्यादिना च सकर्मकस्यापि अकर्मकत्वं भवति । यदाह--

धातोरर्थान्तरे वृत्ते - र्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥ २ ॥

अर्थान्तरे वर्त्तमानाद्धातोः सकर्मकस्यापि अकर्मिका क्रिया भवति । यथा भारं वहति उद्यच्छतीत्यर्थः, नदी वहति स्रवतीत्यर्थः । कर्मणो धात्वर्थान्तःप्रवेशादकर्मकत्वम । यथा ४६५ जीव ( जीव ) प्राणधारणे जीवति । ७२८ हर्दि (हद्) पुरीषोत्सर्गे हदते । अत्र प्राणपुरीषाख्ये कर्मणी धात्वर्थेनैव क्रोडीकृते । कर्मणः प्रसिद्धत्वात् । यथा ८२७ वृषू ( वृष् ) सेचने । देवो वर्षति । न पुनरत्र रक्तं वर्षति । पार्थः शरान् वर्षति । कर्मणोऽविवक्षितत्वात् । यथा नेह पच्यते नेह भुज्यते । कर्माविवक्षा चौदासीन्यनिवृत्तिमात्रपरतया प्रयोगात् । यथा किं करोतीति प्रश्ने पचति पठतीत्यादि प्रत्यवस्थानं नतु भवति विद्यते वेत्यादि तेषामपर्यनुयोज्यत्वात् । यत्तु किं करोतीति प्रश्ने भवतीत्युत्तरं तत्क्रियाख्यकर्मनिबन्धनं नतु बाह्यकर्मापेक्षं भवनं करोतीत्यर्थविगमात् । क्रिया हि सर्वधातूनामान्तरं कर्म । अत एव क्रियाविशेषणानां कर्मत्वं स्मरन्ति । नन्वेवं क्रियाविशेषणादिति योगो व्यर्थः, कर्मणीत्येव द्वितीयासिद्धेः । नैवम । आन्तरकर्मणा सकर्मणोऽपि अकर्मककार्यप्रतिपत्त्यर्थत्वाद्योगस्य । तेन सुखं सुप्त इत्यादौ कर्त्तरि क्तः सिद्धः । सुखं स्थातेत्यादौ कृन्निमित्ता षष्ठी न भवतीति । अत एव सकर्मकाकर्मकव्यवहारो द्रव्यकर्मनिमित्त इत्युच्यते । यदाह—

॥ सकर्मकाकर्मकत्वं द्रव्यकर्मनिबन्धनम् ॥

---

## ॥ अथ द्विकर्मकगणनानिरूपणम् ॥

नीह्वहिकृषो ण्यन्ता दुहिब्रूपृच्छिभिक्षिचिरुधिशास्वर्थाः ।
पचियाचि दण्डिकुग्रहमथिजिप्रमुखा द्विकर्माणः ॥ १ ॥

इमे सर्वे धातवो द्विकर्मका विज्ञेयाः । ८८४ णींग् ( नी ) प्रापणे । गा-

ममजां नयति । ८८५ हृंग् ( हृ ) हरणे । निवासं हरति घासं । ९९६ वहीं (वह् ) प्रापणे । ग्रामं भारं वहति । ५०६ कृषं (कृष् ) विलेखने । १३१९ कृषीं-त् ( कृष् ) विलेखने । ग्रामं बलिवर्दं कर्षति । ण्यन्ता इति । ३ घ्रां ( घ्रा ) गन्धोपादाने । जिनदासं पुष्पाणि घ्रापयति । दुहिब्रूपृच्छिभिक्षिचि रुचिशासुधातूनामर्था इव अर्था येषां ते तथा । दुहिप्रभृतीनां षण्णां धातूनां येऽर्थाः प्रतिपादिताः तादृशा अर्था येषां धातूनां भवन्ति तेऽपि धातवो द्विकर्मका विज्ञेयाः । ११२७ दुहीँक् ( दुह् ) क्षरणे । गां दोग्धि पयः । ११२५ ब्रूगृक् ( ब्रू ) व्यक्तायां वाचि । भव्यान् धर्मं ब्रूते । १३४७ प्रच्छंत् ( प्रच्छ् ) ज्ञीप्सायाम् । जनं मार्गं पृच्छति । ८८० भिक्षि ( भिक्ष् ) याञ्चायाम् । भिक्षते गां राजानम् । १२९० चिंगृट् ( चि ) चयने । वृक्षं पुष्पाणि अवचिनोति । १४७३ रुधूंपी ( रुधू ) आवरणे । शठं गृहमवरुणद्धि । १०९५ शासूक् ( शास् ) अनुशिष्टौ । मनुष्यं धर्मं शास्ति । ८९२ डुपचींष् ( पच् ) पाके तण्डुलानोदनं पचति । याचिरत्रानुनयार्थस्तेन भिक्ष्यर्थाद्भिदः । ८९१ डुयाचृग् ( याच् ) याञ्चायाम् । शठं धर्मं याचतेऽनुनयतीत्यर्थः । १८६९ दण्डण् ( दण्ड् ) दण्डनिपाते । देवदत्तं शतं दण्डयति । ८८८ डुकृंग् ( कृ ) करणे । मृदं घटं करोति । १५१७ ग्रहीश् [ग्रह्] उपादाने । द्रव्यं धान्यं प्रतिगृण्हाति । १५४७ मन्थश् ( मन्थ् ) विलोडने । समुद्रममृतमथ्नाति । ८ जि ( जि ) अभिभवे । देवदत्तं शतं जयति । प्रमुखग्रहणात् १५६३ मुषश् (मुष्) स्तेये । गोविन्दं शतं मुष्णाति । एतद्व्याख्या तु मतान्तरीयोक्तकारिकानुसारेण कृता । हेमचन्द्रसूरीशानैस्तु । नव [ द्विविधं कर्म तु ) द्विकर्मकेषु दुहिभिक्षिरुधिप्रच्छिचिग्रूशासुब्रूर्थेषु याचि जयतिप्रभृतिषु नीहृकृषवहेषु च भवति । अत्रोदाहरणानि तु निरुक्तान्येव । अत्रोक्तातिरिक्तधातूनामुपरि गणना कृता । सा अत्रैव समवसरति । इदं तस्या उपलक्षणं मतभेदो वेति स्वयमूह्यम् ।

॥ इति द्विकर्मकगणनानिरूपणम् ॥

---

## ॥ अथ गौणमुख्यकर्मनिरूपणम् ॥

न्यादीनां कर्मणो मुख्यं प्रत्ययो वक्ति कर्मजः ।
नीयते गौर्द्विजैर्ग्रामं भारो ग्राममथोह्यते ॥ १ ॥
गौणं कर्म दुहादीनां प्रत्ययो वक्ति कर्मजः ।
गौः पयो दुह्यतेऽनेन शिष्योऽर्थं गुरुणोच्यते ॥ २ ॥

कर्म द्विविधं मुख्यं गौणञ्च । तत्र यदर्थं क्रिया आरभ्यते तत्प्रधानम् । तत्सिद्ध्यै यत्क्रियया व्याप्यते गवादि तदप्रधानम् । अन्यत्सर्वं स्फुटम् । किञ्च गत्यर्थानामकर्मकाणां तु णिगन्तानां प्रधाने एव कर्मणि गम्यते मैत्रो ग्रामम् । आस्यते मासं मैत्रः । बोधाहारार्थशब्दकर्मकाणां तु णिगन्तानामुभयत्र बोध्यते शिष्यो धर्मम् । बोध्यते शिष्यं धर्मो वा । भोज्यतेऽतिथिरोदनः । भोज्यतेऽतिथिरोदनम् । पाठ्यते शिष्यो ग्रन्थम् । पाठ्यते शिष्यं ग्रन्थो वा ।

॥ इति गौणमुख्यकर्मनिरूपणम् ॥

---

## ॥ अथ धातूपसर्गजन्यभेदप्रकाशनिरूपणम् ॥

बीजकालेषु सम्बद्धा यथा लाक्षारसादयः ।
वर्णादिपरिणामेन फलानामुपकुर्वते ॥ १ ॥
बुद्धिस्थादभिसम्बन्धा– त्तथा धातूपसर्गयोः ।
अभ्यन्तरीकृतो भेदः पदकाले प्रकाश्यते ॥ २ ॥

व्याख्या—अथ किं धातुः पूर्वमुपसर्गेण युज्यते उत साधनेनेति ! साधनं हि क्रियां निवर्त्तयति [ साध्यत्ववैशिष्ट्येन बोधयतीति तामुपसर्गो विशिनष्टि ( स्वद्योत्यविशेषणवैशिष्ट्येन बोधयतीत्यर्थः ) अतः पूर्वं साधनेन साधनं कारकम् तदभिधायि कार्येण, युज्यत इति तदयुक्तम् पूर्वं हि धातोः साधनेन सम्बन्धे आस्यते गुरुणा इत्यकर्मकः उपास्यते गुरुरिति सकर्मकः केन स्यात्.

यस्माद्विशिष्टैव क्रिया साधनेन साध्यते नतु साधनाल्लब्धस्वरूपान्यतो विशेषं लभते तस्मात् पूर्वमुपसर्गेण युज्यते–इति युक्तम् । न च प्रत्ययसम्बन्धमन्तरेण क्रियाविशेषस्यानभिव्यक्तेने धातोः पूर्वमुपसर्गेण सम्बन्धो युज्यते इति

वाच्यम ? यतः—

बीजकालेषु सम्बद्धा यथा लाक्षारसादयः ।
वर्णादिपरिणामेन फलानामुपकुर्वते ॥ १ ॥

बीजकालेषु-बीजोत्पत्तिसमयेषु सम्बद्धाः सम्पृक्ताः, [ बीजैरिति शेषः ] लाक्षारसादयः—जतुरसप्रभृतयः फलानां वर्णादिपरिणामेन रूपरसादिपरिणमनद्वारा, यथा उपकुर्वते ।

( बुद्धिस्थादभिसम्बन्धात्तथा धातूपसर्गयोः ॥
अभ्यन्तरीकृता भेदः पदकाले प्रकाशते ॥ १ ॥ )

तथा धातूपसर्गयोः बुद्धिस्थाद् ( बुद्धिविषयीकृतात्. ) अभिसम्बन्धात् भेदः ( उपसर्गार्थकृतो विशेषः ) अभ्यन्तरीकृतः ( बुद्धिस्थीकृतः, धातुनेति शेषः, पदकाले उपसर्गसंज्ञकशब्दप्रयोगकाले प्रकाशते. श्रोतुरिति शेषः ॥ इति अङ्कुरोत्पत्तिसमये लाक्षारसादिसेकेन फलानां रूपरसादिवैलक्षण्यं भवति इति लोकप्रसिद्धिः, तत्र यथा लाक्षारसादीनां पूर्वकालिकसम्बन्धेन जायमाना विलक्षणता फलकाले प्रकाशते तथा पूर्वकालिकोपसर्गसम्बन्धेन जायमानः उपसर्गार्थकृतो विशेषः उपसर्गप्रयोगकाले प्रकाशते-एवं च पूर्वमुपसर्गयोगो नाम तदर्थसम्बन्धः तत उपसर्गशब्दात् पूर्वं साधनकार्ययोगः तत उपसर्गसंज्ञकशब्दप्रयोग इति तात्पर्यम्, इत्यलम् ।

## ॥ अथ षोपदेशनिरूपणम् ॥

स्वरदन्त्यपरसकारादयः स्मिस्विदिस्वदिस्वञ्जिस्वपयश्च ।
षोपदेशाः सृपि, सृजि, स्त्या, स्तॄ, स्तृ, सृ, सेकृवर्जम् ॥१॥

स्वरा अवर्णादयो दन्त्या लृवर्णतवर्गलसास्त परा यस्मात्तादृशो यः सकारः स आदौ येषां ते स्वरदन्त्यपरसकारादयः स्वरपरसादयः दन्त्यपरसादयश्च धातवः षोपदेशा ज्ञेयाः उत्तरदलदर्शितान् विहाय । यथा ९९० षहि ( सह् ) मर्षणे । ८ ष्ठां ( स्था ) गतिनिवृत्तौ । उक्तलक्षणेनाग्रहादाह-स्मीत्यादि—स्मिप्रभृतयश्च षो-

पदेशा विज्ञेयाः । ५८७ ष्मिङ् ( स्मि ) ईषद्धसने । ९४६ ञिष्विदाङ् ( स्विद् ) मोचने च । ११६८ ष्विदांच् ( स्विद् ) गात्रप्रक्षरणे । ७७९ ष्वदि ( स्वद् ) आस्वादने । १७४२ ष्वदण् ( स्वद् ) आस्वादने । ष्वञ्जित् ( स्वञ्ज् ) सङ्गे । १०८८ ञिष्वपंक् ( स्वप् ) शये । सृपिप्रभृतीन् विहाय । ते चेमे । ३४१ सृप्लृं ( सृप् ) गतौ । १२५५ सृजिन्च् ( सृज् ) विसर्गे । १३४९ सृजंत् ( सृज ) विसर्गे ४० । स्त्यैं (स्त्यै) सघाते । १५२१ स्तृगृश् ( स्तृ ) आच्छादने । १२०२ स्तृंगृट् ( स्तृ ) आच्छादने । २५ सृं ( सृ ) गतौ । ६३५ सेकृङ [ सेकृ ] गतौ । षोपदेशफलं तु असीषहत् इत्यादौ षत्वकरणम । स्मिप्रभृतिभिः साहचर्यादेक-स्वराणामेव षोपदेशस्मृतिः । अत एव सृत्रसत्रसंग्रामसामममाजस्थूलस्तनस्तेन स्तोमसुखानामषोपदेशत्वात् सोसुत्यते सिसत्रयिषते इत्यादौ षत्वं न भवति ।

## ॥ इति षोपदेशप्रकरणम ॥

---

## ॥ अथ णोपदेशनिरूपणम ॥

सर्वे च नादयो णोपदेशा नृति नन्दि नर्दि नशि नाटि नक्कि नाधृ नाथृ नॄवर्जम । येषां धातूनामादौ नकारा भवेत्ते णोपदेशा विज्ञेयाः । नृतिप्रभृतीन् विहाय ते चेमे ॥ ५२ नृतैच् (नृत्) नर्तने । ३१२ टुनदु [नन्द्] समृद्धौ ३०२ नर्द ( नर्द् ] शब्दे । १२०२ नशौच ( नश् ] अदर्शने । नाटीति १५९३ नटण् [नट्] अवस्यन्दने इत्यस्यैवात्र वर्जनं नतु १८७ णट्ट लट्ट नृत्तौ ॥ १०३३ णट [ नट् ] नतौ एतयोः । १५७३ नक्कण् ( नक्क् ) नाशने । ४४७ नाधृङ् [ नाधृ ) नाथवत्न । ७१६ नाथृङ् [ नाथ् ] उपतापैश्वर्याशीःषु च । १०१६ नॄ नये । १५२७ नॄश् [ नॄ ] नये । एतद्व्यतिरिक्ता नकारादयः सर्वे णोप-देशाः यथा ६५ णख [ नख् ] गतौ । णोपदेशफलन्तु प्रणखतीत्यादौ णत्वम । ननु ६४ नख ( नख् ) गतौ । इत्यस्य अणोपदेशत्वात कथमत्र न वर्जनमिति चेदुच्यते नख णख इति पाठसामर्थ्यादेव अणोपदेशत्वमेवान्यत्रापि ।

## ॥ इति णोपदेशप्रकरणम ॥

## ॥ अथ धात्वर्थविशेषनिरूपणम् ॥

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
विहाराहारसंहार प्रहारप्रतिहारवत् ॥ १ ॥
धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्त्तते ।
तमेव विशिनष्टयन्योऽनर्थकोऽन्यः प्रयुज्यते ॥ २ ॥

उपसर्गेण ॥

प्रपरापसमन्ववनिर्दुरभि–व्यधिसूदतिनिप्रतिपर्यपयः ।
उप आङिति विंशतिरेष सखे ! उपसर्गगणः कथितः कविभिः ॥१॥

इत्याद्यन्यतमेन धात्वर्थो धातुपाठे य उक्तोऽर्थः स बलात्प्रतीतिसामर्थ्यादन्यत्रान्यस्मिन्नर्थे नीयते स्थाप्यते पर्यवसितो भवतीत्यर्थः । अत्र ये उपसर्गस्य द्योतकत्वमामनन्ति तन्मते तु अन्योऽप्यर्थस्तस्य धातोरेव ये तु वाचकत्वमाश्रयन्ति तन्मते धातुसम्बन्धात्तमन्यमर्थमुपसर्ग एवाभिधत्ते तदेवाह–८८५ हृग् ( हृ) हरणे । अस्य हरणार्थत्वेऽपि विहारः क्रीडासमीचीनगमनं वा ॥ आहारो भोजनम् । संहारो विनाशः । प्रहारस्ताडनम । प्रतिहारः द्वाःस्थकर्म । इत्यादौ उक्तादिक्तविविधार्थावगतेः । कश्चिदुपसर्गो धात्वर्थं बाधते । यथा–३२० षिधू ( सिध् ) गत्याम् । प्रतिषेधति । अत्र गत्यर्थं बाधित्वा निषेधार्थमभिदधाति । कश्चित्तं मौलधात्वर्थमनुवर्तते यथा अधीयते । अत्र ११०४ इङ्क् ( इ ) अध्ययने । अयमधिनाऽवश्यंभावी योगो न चार्थविशेषः । अन्य उपसर्गस्तमेव मूलधात्वर्थं विशिनष्टि विशिष्टतामापादयति । यथा ९९२ डुपचींष् ( पच् ) पाके प्रपचति प्रकृष्टं प्रकर्षे वा पचतीत्यर्थः । अन्य उपसर्गोऽनर्थक एव प्रयुज्यते । ३९६ गम्लृं ( गम् ) गतौ । अधिगच्छति । अत्र न धात्वर्थबाधो न वा धात्वर्थविशेषणा न वा गम्–धातुनाऽवश्यंभावी योग इति ।

## ॥ इति धात्वर्थविशेषनिरूपणम् ॥

## ॥ अथ अनुस्वारनिरूपणम् ॥

नकारजावनुस्वार–पञ्चमौ धुटि धातुषु ।
सकारजः शकारश्चे–षाट्टवर्गस्तवर्गजः ॥ १ ॥

धातुषु धुटि धुडादौ वर्णे परे सति योऽनुस्वारो वर्गपञ्चमाक्षरो वा दृश्यते स नकारस्थाने जात इति वेदितव्यम् । ४९६ दंशं ( दनृश्–दंश् ) दशने दशति । अत्र यदि नकारजोऽनुस्वारो न भवेत्तर्हि दंशमञ इति लुग्न स्यात् १३७८ तुम्फत [ तुनृफ्–तुम्फ् ) तृप्तौ । तृफति । अत्रापि नकारजो मकाररूपपञ्चमो वर्णो न स्यात्तर्हि नो व्यञ्जनस्येति लुग्न स्यात् । एवं चे चकारे परे यः शकारः स सकारजः सकारस्थाने जातः । यथा ॥ ६ षस्च ( सस्च्–सश्च् ) गतौ । सश्चति । अत्र शकारः सकारस्थाने जातः । षात् रकारात् षकाराच्च परो यः टवर्गः स तवर्गौ जातः । यथा ११२३ ऊर्णुगृक् ( ऊर्नु–ऊर्णु ) आच्छादने । ऊर्णुनाव । अत्र रकारात्परो यो णकारः स नकारस्थाने जातः । अन्यथा ऊर्णुणाव इत्येव स्यात् । ५ ष्ठां ( स्था ) गतिनिवृत्तौ । अत्र षकारस्तु षोपदेशार्थस्तदन्तरं ठकाररूपटवर्णस्थकाररूपतवर्गजातः । एवं षाट्ट इत्यत्र पूर्वार्थे पञ्चमीविवक्षायां २५७ अट्टङ ( अट्ट्–अड्ड् ) अभियोगे अड्डति इत्यादिकमपि भावनीयम् ।

## ॥ इत्यनुस्वारादिनिरूपणम् ॥

---

## ॥ अथ धातुत्वनिरूपणम् ॥

क्रियार्थो धातुः । क्रिया कृतिः प्रवृत्तिर्व्यापार इति यावत् । पूर्वापरीभूता साध्यमाना रूपा सार्थोऽभिधेयं यस्य स शब्दो धातुसंज्ञो भवति। पूर्वावयवयोगात्पूर्वाऽपरावयवयोगादपरा पूर्वा चासावपरा च पूर्वापरा अपूर्वापरा पूर्वापराभूता पूर्वापरीभूता तत्र पूर्वोऽवयवोऽधिश्रयणादिरपर उदकसेकादिस्तौ तौ द्वावपि भागौ पाकक्रियायां स्तः । सा ह्यधिश्रयणोदकसेचनादिरूपा साध्यमाना साधनायत्तस्वरूपा क्रियास्ति । यथा पचति कश्चैत्रः कमोदनं कैः काष्ठैः क्व स्थाल्यां कुतः कुशूलात् कस्मै

मैत्रायेति भावना। ननु पचतीत्यादिष्वस्तु क्रियात्वं भवत्यादिषु तु सत्ताया नित्यत्वेन साध्यमानत्वाभावात् तदभावे च पूर्वापरविभागाभावात् तदभावे च क्रियार्थत्वाभावे न प्राप्नोति धातुसंज्ञा। सत्यम्। आधेयभेदेन सत्तापि पूर्वापरीभूता साध्यमाना। यथा देवदत्तसत्ता क्वचिद्गमनयुक्ता क्वचिद्भोजनयुक्ता क्वचित्पठनयुक्ता। एवमनेकधा योजना कार्या। एधते। अस्ति। दीव्यति। सुनोति। तुदति। रुणद्धि। तनोति। क्रीणाति। सहति। आयादिप्रत्ययान्तानामपि क्रियार्थत्वात् धातुत्वम्। गोपायति। कामयते। ऋतीयते। जुगुप्सते। कण्डूयति। पापच्यते। चोरयति। कारयति। चिकीर्षति। पुत्रकाम्यति। पुत्रीयति। अश्वति। श्येनायते। हस्तयते। मुण्डयति। एवं जुस्तम्भूचुलुम्पादीनामपि। जस्तनः। स्तभ्नाति। चुलुम्पाञ्चकार। प्रेङ्खोलयति। ननु क्रियार्थे धातौ शिश्ये इत्यादिषु भावे तदर्थप्रत्ययस्यापि धातुत्वप्रसङ्गः। भावप्रत्ययो हि क्रियार्थ एवोत्पद्यते। ततश्चात्मनेपद्यक्षरस्येत्यात्वप्रसङ्गः। आत्वं हि धातोर्विहितप्रत्ययनिमित्तकञ्चेति। अतः प्रत्ययनिषेधार्थं क्रियाविशेषकं प्रथमग्रहणं कर्तव्यं व्याख्येयञ्च प्रथमं यः क्रियामाहेति। प्राथम्यञ्चात्राभिधानापेक्षं ग्राह्यं तेन किं सिद्धमन्येनानभिहितां क्रियां य आह स धातुः। अयमर्थः—अन्येभ्यः क्रियाभिधायिभ्यो यः प्रथममाहेति। शिश्ये इत्यत्र तु शीत्यनेनाभिहितां क्रियां प्रत्यय आहेति न तस्य धातुसंज्ञा प्रवृत्तिः। शब्दार्थापेक्षया प्राथम्यं घटते तत्र शब्दतश्चेत्पुत्रीयतीत्यादावपि न प्राप्नोति। नात्र प्रथममुच्चार्यमाणः पुत्रशब्दः क्रियामाह। अर्थतश्चेत्पुत्रीयतीत्यादौ प्रथमा आद्या क्रिया अप्रथमेनापि क्येनाभिधीयते न तु द्वितीयेति सिद्ध्यति धातुसंज्ञा।

ननु प्रथमग्रहणे सति चिकीर्षतीत्यत्रापि न प्राप्नोति धातुसंज्ञा। यतोऽत्रापि सन् प्रत्ययो न प्रथमं क्रियामाह, अपि तु कृ इत्यनेनाभिहिताम्। नैवम्। करोत्यर्थोपसर्जनामिच्छामन्येनानभिहितां सन् प्रत्यय आहेति स्यादेव धातुसंज्ञेति। अत्रोच्यते। यथाऽत्र प्रथमग्रहणे कृते शिश्ये इत्यत्र धातुसंज्ञा न भवति तथा स्वार्थिकायादिप्रत्ययान्तानां न प्राप्नोति गोपायति कामयते इत्यादिषु अत्रापि अभिहिताया एव क्रियाया आयादिभिरभिहितत्वात्। तस्मादेव व्याख्येयं

क्रियामेव प्राधान्येन योऽभिधत्ते स क्रियार्थाभिधायी साधुसंज्ञा । गोपायतीत्यादावपि तदस्तीति सिद्धा धातुसंज्ञा । शिश्य इत्यादौ तु भूतानद्यतनपरोक्षत्वादेरभिधानान्न धातुसंज्ञा । एतेन क्रियैवाभिधेया यस्य स धातुः । एवं च कृत्वा कर्तुमित्यादिषु साध्ये भावे कृत्प्रत्ययान्तस्यापि न धातुसंज्ञा । किञ्चान्यदपि उत्तरमस्ति । अव्ययसंज्ञया धातुसंज्ञाया बाधितत्वात् । इकिश्तिव् स्वरूपार्थे इति प्रत्ययान्तस्य सिद्धसाध्ययोरभेदोपचारेण सिद्धरूपत्वात् । कर्तव्यं भूयते इत्यादौ तु भावे त्याद्यन्तस्य क्रियार्थत्वेऽपि न धातुत्वं साहचर्यात् । यतोऽन्येषामलिङ्गसङ्ख्यानामपदसंज्ञकानां धातुसंज्ञा प्रत्ययादि । अत्र लिङ्गसङ्ख्यानां विद्यमानत्वात् । क्रियामेव प्राधान्येन योऽभिधत्ते स धातुरिति यल्लक्षणं कृतं तस्य शिष्टधातुपाठानुसारित्वाद् आणपयतीत्यानिवृत्तिः । ननु यद्येवं शिष्टधातुपाठ एवास्तु किमनेन लक्षणेनेति चेन्मैवं पाठपठितानामपि क्रियार्थानामेव धातुत्वज्ञापनार्थत्वात् । अयं भावः—लक्षणात्पृथक् पठिता अपि त एव शिष्टा धातवो ये क्रियार्थाः । तेन यावाप्रभृतीनां सर्वनामविकल्पाद्यर्थानां पाठाविसंवादित्वेऽपि लक्षणविसंवादित्वाद् आणपयतीत्यादीनां तु क्रियार्थत्वेऽपि पाठविसंवादित्वाद्धातुत्वाभावः । अन्वयव्यतिरेकाभ्यां च धातोः क्रियार्थत्वापगमः । तथाहि—पचतीत्यादौ धातुप्रत्ययसमुदाये संसृष्टक्रियाकालकारकाद्यनेकार्थाभिधायिनि प्रयुज्यमाने धातोरेव क्रियार्थत्वमवगम्यतेऽन्वयव्यतिरेकाभ्यां नेतरेषाम् । पचतीति प्रयोगे द्वयं श्रूयते पच् इति प्रकृतिः अति-इति प्रत्ययश्च । अर्थोऽपि कश्चिद्गम्यते । विक्लित्तिः कर्तृत्वमेकत्वम् । पठतीत्युक्ते कश्चित् शब्दो हीयते कश्चिदुपजायते कश्चिदन्वयी । पच् शब्दो हीयते पठ् शब्द उपजायते अतिशब्दोऽन्वयी । अर्थोऽपि कश्चिद्धीयते कश्चिदुपजायते कश्चिदन्वयी । विक्लित्तिर्हीयते पठिरुपजायते एकत्वञ्चान्वयी । तेन मन्यामहे यः शब्दो हीयते तस्यासावर्थो यो हीयते यश्च शब्द उपजायते तस्यासावर्थो य उपजायते यश्च शब्दोऽन्वयी तस्यासावर्थो योऽन्वयीति । ननु कृतिः करोत्यर्थः क्रिया तत्र युक्तं पचादीनां किं करोमि पचति किं करोति पठतीति करोतीत्यर्थगर्भितत्वात् क्रियात्वम् अस्ति विद्यते भवतीनां तु न युक्तम्,

नहि भवति किं करोति अस्ति भवति विद्यते चेति । तदयुक्तम् । न करोत्यर्थः क्रियाशब्दस्य प्रवृत्तिनिमित्तमपि तर्हि कारकव्यापार विशेषः । व्यापारश्च व्यापारान्तराक्रिन्यते इत्यस्त्याद्यर्थोऽपि क्रियैव । करोत्यर्थस्तु क्रियाशब्दस्य व्युत्पत्तिनिमित्तमेव । ननु पचतीत्यादिषु हि तदस्ति इति धातुत्वं यतः पचती युक्ते न पठति न गच्छति न किञ्चिदन्यद्व्यापारान्तरं विधत्ते किन्तु पाकरूपविशेष एव गम्यते । अपि तु अस्त्यादीनां न प्राप्नोति क्रियात्वं सत्ताया व्यापारविशेषाभावात् यतः सर्वोऽपि धात्वर्थोऽस्त्यादिभिर्व्याप्तै इति चेत्सत्यम् अस्त्यैवैतत्तथापि पाकादेर्विशेषात्सत्ताया अपि विशेषो ज्ञायते स्वरूपेण । नहि स एव पाकः सैव सत्ता । यथानेकघटाच्छादक एकः पटस्तेष्वनुस्यूतोऽपि तेभ्यो भिद्यते । नहि स एव पटः स एव घटः । एवं प्रस्तुतेऽपि । एवं सति क्रियासामान्यवचनाः कृभ्वस्तयः क्रियाविशेषवचनास्तु पचादय इतिसिद्धम् । यथा क्रियाशब्दस्य न करोत्यर्थः प्रवृत्तिनिमित्तं किन्तु कारकव्यापारविशेषस्तथा भावशब्दे न भवत्यर्थः प्रवृत्तिनिमित्तमपि तु कारकव्यापारविशेष एवेत्यर्थः । यदाह हरिः—आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता । प्रकल्पिता यथा शास्त्रे सद्यादिष्वपि क्रमः ॥१॥ साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना । सत्त्वभागस्तु यस्तस्याः स घञादिनिबन्धनः ॥२॥ तथा च भावे घञ् इत्युक्त्वा पाकः कार इत्यादयोऽप्युदाह्रियन्ते । क्रियोपपदाद्धातोस्तुमित्युक्त्वा योद्धुं धनुर्भवति द्रष्टुं चक्षुर्जातमित्याद्यपि उदाहरणं युक्तम् । यदाहुः—यत्रान्यक्रियात्पदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रथमपुरुषे प्रयुज्यते । क्रिया च द्वेधा सिद्धसाध्यत्वभेदात् । तत्र सिद्धस्वभावोपसंहृतक्रमा परितः परिच्छिन्ना सत्त्वभावमापन्ना घञादिभिरभिधीयते । यदाह—कृदभिहितो भावो द्रव्यवत्प्रकाशते इति । तुमादिभिस्तु सत्त्वभावमनापन्नेति विशेषः । साध्यमानावस्था पूर्वापरीभूतावयवा भूतभविष्यद्वर्तमानसदसदाद्यनेकावयवरूपाख्यातपदैरुच्यते । यदाह—पूर्वापरीभूतं भावमाख्यातेनाचष्टे । यथा च पचतीत्यत्र पूर्वापरीभूत-भावस्तद्वदेव जायते अस्ति विपरिणमते वर्धते अपक्षीयते विनश्यति भवति श्वतते संयुज्यते समवैतीत्यादावपि । साध्यत्वाभिधानेन क्रमरूपाश्रयणात्

क्रियाव्यपदेशः सिद्धः । तदुक्तम्–यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते । आश्रितक्रमरूपत्वात् तत् क्रियेत्यभिधीयते ॥ १ ॥ सिद्धं सत्तादि असिद्धं तु कटादि । ननु एवं तर्हि सत्तायाः साध्यमानता कया रीत्या । उच्यते यथा एकस्मिन् स्थाने पाषाणखण्डं कस्तूरिका चास्ति ततः कस्तूरिकामाहात्म्या त्पाषाणखण्डमपि सुगन्धि भवत्येवमत्रापि कस्मिंश्चिदेकस्मिन् पिण्डे पाकक्रिया सत्ता च विद्यते पाकक्रिया च पूर्वापरीभूता ततस्तस्या माहात्म्यात्सत्तापि पूर्वापरीभूता भवतीति साध्यमानत्वम् । किं बहुनाख्यातपदेन उच्यमानः सिद्धभावोऽपि साध्य रूपतां भजति तन्माहात्म्यादित्यलं बहुना ।

## ॥ इति धात्वर्थनिरूपणम् ॥

श्रीमत्तपोगणगगनाङ्गणगगनमणि–सार्वसार्वज्ञशासनसा-
र्वभौम–तीर्थरक्षण-विद्यापीठादि प्रस्थानपञ्चकसमारा-
धक–संविग्नशाखीय–आचार्यचूडामणि–अखण्ड-
विजयश्रीमद्गुरुराज विजयनेमिसूरीश्वर चरणे-
न्दिरामन्दिरेन्दिन्दिरायमाणान्तिषन्मुनिला-
वण्यविरचिते धातुरत्नाकरे अनिट्कारिका-
नुबन्धकारिकाघृत्गणफलसकर्मकत्वाक-
र्मकत्वद्विकर्मकगणनागौणमुख्यकर्मधा-
तूपसर्गजन्यभेदप्रकाशनषोपदेश-
धात्वर्थविशेषानुस्वारधातुत्व-
निरूपणरूपप्रकीर्णकप्रकर-
णं सम्पूर्णम् ।

॥ समर्थितश्च धातुरत्नाकरस्य प्रथमो विभागः ॥

श्रीरस्तु ।

**श्रीधातुरत्नाकरस्थस्वपराभिमतधातूनामकाराद्यक्षरानुपूर्व्या किञ्चित्संस्कृता निरनुबन्धा सूची ॥**

यद्यपि वैयाकरणप्रकाण्डैर्गणो नवधा विभक्तस्तथापि लौकिक प्रथा तु गणा दशेति । लौकिका हि द्वितीयगणे ये धातवो न द्विर्भावं भजन्ति ते द्वितीयगणीयाः, ये भजन्ति ते तृतीयगणीया इत्यामनन्ति । अत्र च लौकिकप्रथानुसारेणेयं सूची ॥

।रविशेषा…
स्यैवैतत्तथापि पाक…
…व पाकः सैव सत्ता । य-
…भिद्यते । नहि स एव पटः
…न्यवचनाः कृभ्वस्तयः क्रि-
…शब्दस्य न करोत्यर्थः प्रवृत्ति-

| ग० | धा- ना० | धा-र प० | ग० | धा ना० | धा र-प० | ग० | धा- ना० | धा-र-प० |
|---|---|---|---|---|---|---|---|---|
| १० | अंगू | १०६७ | १ | अट्टू | ३४६ | | | |
| १ | अंहू | ४४२ | १० | अट्टू | ९० | | | |
| १० | अंहू | १००७ | १ | अडू | १ | | | |
| १ | अकु | ५५६ | १ | अड्डू | | | | |
| १ | अक्षू | २९२ | १ | अड्डू | १३२ | १ | अचू | ५८ |
| १ | अगू | ५५७ | १ | अणू | १३६ | १० | अर्चू | १०९३ |
| | अगदू | ११४९ | १ | अण्ठू | ३५० | १ | अर्जे | ७७ |
| १० | अघू | १०३४ | १ | अतू | १४६ | १० | अर्जू | ०७० |
| १ | अङ्कू | ३१४ | २ | अदू | ५७० | १० | अर्थू | १०७४ |
| १० | अङ्कू | १०३२ | २ | अनू | ६८५ | १ | अर्दू | १५८ |
| १ | अङ्गू | ४७ | ४ | अनू | ६९७ | १० | अर्दू | ११०१ |
| १० | अङ्गू | १०३४ | १ | अन्तू | १४९ | १ | अर्बू | १८६ |
| १ | अङ्घू | ३२८ | १ | अन्दू | १६१ | १ | अर्बू | २४५ |
| १ | अजू | ७१ | १ | अन्दोलू | ११५७ | १ | अर्हू | २८९ |
| १ | अञ्चू | ५८ | ७ | अन्धू | १०५० | १० | अर्हू | ९८९ |
| १ | अञ्चू | ४६३ | १ | अभ्रू | २१२ | | | |
| १० | अञ्चू | ९६९ | १ | अमू | २०४ | १ | अलू | ४९२ |
| ७ | अञ्जू | ८२९ | १ | अमू | २०५ | १ | अवू | २५१ |
| १० | अञ्जू | ९९३ | १० | अमू | ९८० | ५ | अशू | ७३० |
| १ | अटू | १०३ | १ | अम्बू | ३९४ | ९ | अशू | ८७९ |

| ग० | धा० ना० | धा-र-पृ० |
|---|---|---|
| १ | अपु | ५०४ |
| १ | असू | ५०५ |
| २ | असू | ५९२ |
| ४ | असु | ६७० |
| | असू | ११३९ |
| | असु | ११३३ |
| | **आ** | |
| १ | आङ्छू | ६७ |
| ५ | आपु | ७२७ |
| १० | आपु | ११०२ |
| २ | आसू | ६०१ |
| | **इ** | |
| १ | इ | ११ |
| २ | इ | ५७७ |
| २ | इ | ५७८ |
| २ | इ | ५९३ |
| १ | इखु | ४३ |
| १ | इङ्खु | ४३ |
| १ | इङ्गु | ४९ |
| १ | इङ्जु | ३४० |
| १ | इटु | १०४ |
| १ | इन्दु | १६१ |
| ७ | इन्धु | ८३४ |
| १ | इन्वु | २५१ |
| | इमसू | ११३८ |
| | इयसू | ११३८ |
| | इरधु | ११४६ |
| | इरस्नु | ११३७ |

| ग० | धा० ना० | धा-र-पृ० |
|---|---|---|
| ६ | इलू | ७८० |
| १० | इलु | ९५३ |
| ४ | इषु | ६४१ |
| ६ | इषु | ७८५ |
| ९ | इषु | ८७९ |
| | इषुध | ११४६ |
| | **ई** | |
| २ | ई | ५७९ |
| ४ | ई | ६९० |
| १ | ईक्षु | ४५५ |
| १ | ईङ्खु | ४४ |
| १ | ईजु | ३४० |
| २ | ईडु | ५९८ |
| १० | ईडु | ९११ |
| २ | ईरु | ५९९ |
| १० | ईरु | ११११ |
| १ | ईर्क्ष्यु | २०९ |
| १ | ईर्ष्यु | २०१ |
| २ | ईशु | ५९९ |
| १ | ईषु | २५९ |
| १ | ईषु | ४२९ |
| १ | ईहु | ४४२ |
| | **उ** | |
| १ | उ | ३०३ |
| १ | उक्षु | २९० |
| १ | उखु | ३७ |
| १ | उङ्गु | ५० |
| ४ | उचु | ६४५ |

| ग० | धा० ना० | धा-र-पृ० |
|---|---|---|
| ६ | उच्छु | ७५१ |
| ६ | उछु | ७५२ |
| ६ | उज्झु | ७५७ |
| १ | उठु | ११५ |
| ७ | उन्दू | ८३१ |
| ६ | उज्जु | ७५३ |
| ६ | उभू | ७७२ |
| ६ | उम्भू | ७७३ |
| | उरसू | ११३६ |
| | उरण | ११५१ |
| १ | उषु | २७२ |
| | उषस् | ११३६ |
| १ | उहु | २८८ |
| | **ऊ** | |
| १० | ऊन | १०५२ |
| १ | ऊयु | ४१२ |
| १० | ऊर्जु | ८९२ |
| २ | ऊर्णु | ६०५ |
| १ | ऊर्दु | ३७७ |
| १ | ऊवु | २४२ |
| १ | ऊषु | २५९ |
| १ | ऊहु | ४४८ |
| | **ऋ** | |
| १ | ऋ | १८ |
| ३ | ऋ | ६१५ |
| ६ | ऋचु | ७४९ |
| ६ | ऋच्छु | ७५० |
| १ | ऋजु | २४१ |

| ग० | धा- ना० | धा-र-पृ० |
|---|---|---|
| १ | ऋञ्ज् | ३४१ |
| ८ | ऋण् | ८३९ |
| १ | ऋत् | १५० |
| १ | ऋतीय् | १५० |
| ४ | ऋध् | ६५० |
| ५ | ऋध् | ७०६ |
| ६ | ऋफ् | ७६८ |
| ६ | ऋफ् | ७६९ |
| ६ | ऋम्फ् | ७७० |
| ६ | ऋष् | ७८९ |
| | **ॠ** | |
| ९ | ॠ | ८६९ |
| | **ए** | |
| १ | एज | ८० |
| १ | एज् | ३३८ |
| १ | एठ् | ३४७ |
| १ | एध् | ३८१ |
| | एला | ११४३ |
| १ | एष् | ४३१ |
| | **ओ** | |
| १ | ओख् | ३३ |
| १ | ओण् | १४३ |
| १० | ओलण्ड् | ९१३ |
| | **क** | |
| २ | कंस् | ६०१ |
| १० | कंस् | १००५ |
| १ | कक् | ३१८ |
| १ | कक्ख् | ३७ |

| ग० | धा- ना० | धा-र-पृ० |
|---|---|---|
| १ | कख् | ५५६ |
| | कग् | ११२८ |
| १ | कङ्क् | ३२० |
| १ | कच् | ३३३ |
| १ | कञ्च् | ३३४ |
| १ | कट् | ९३ |
| १ | कट् | १०५ |
| १ | कट् | १०६ |
| १ | कठ् | ११४ |
| ६ | कड् | ७५८ |
| १ | कड्ड् | १३४ |
| १ | कण् | १४१ |
| १ | कण् | ५६३ |
| १० | कण् | ९७५ |
| १ | कण्ट् | १०३ |
| १ | कण्ठ् | ३४८ |
| १० | कण्ठ् | १०९७ |
| १ | कण्ड् | १३४ |
| १ | कण्ड् | ३६३ |
| १० | कण्ड् | ०१३ |
| | कण्डु | ११२९ |
| १ | कत्थ् | ३७० |
| १० | कत्र | १०६० |
| १० | कथ् | १०४८ |
| १ | कन् | १७२ |
| १ | कन्द् | १६४ |
| १ | कन्द् | ६५१ |
| १ | कब् | १९५ |

| ग० | धा- ना० | धा-र पृ० |
|---|---|---|
| १ | कम् | ४०७ |
| १ | कम्प् | ३९० |
| १ | कर्ज् | ७८ |
| १० | कर्ण् | १०४४ |
| १ | कर्द् | १६० |
| १ | कर्ब् | १८६ |
| १ | कर्व् | २३७ |
| १ | कल् | ४१९ |
| १० | कल् | ९५१ |
| १ | कल् | १०६४ |
| १ | कल्ल् | ४२० |
| १ | कश् | २८२ |
| २ | कश् | ६०२ |
| १ | कष् | २६० |
| १ | कस् | ५३७ |
| २ | कस् | ६०२ |
| १ | काङ्क्ष् | २९८ |
| १ | कामय् | ४०७ |
| १० | काल् | १०६६ |
| १ | काश् | ४२७ |
| ४ | काश् | ७०४ |
| १ | कास् | ४३५ |
| ३ | कि | ६२४ |
| १ | किट् | ९५ |
| १ | किट् | १०५ |
| १ | कित् | १४९ |
| ३ | कित् | ६२५ |
| ६ | किल् | ७८० |

